'मास्टर' मणिमालायाः २०० संख्यको मणिः ( न्यायविभागे ६ )

म० म० श्रीजगदीशतर्कालङ्कारविरचिता

# अवच्छेदकत्वनिरुक्तिः

काशीस्थ–हिन्दुविश्वविद्यालयान्तर्गत–प्राच्यविभागीय–कालेज–
न्यायशास्त्रप्रधानाध्यापक–न्यायाचार्य–तर्कतीर्थ–केशरी–
श्रीवामाचरणभट्टाचार्यकृतया
'विवृत्या' 'मनोरमया' च
समुल्लसिता ।

—०—

सा चेयम्
शास्त्रार्थमहाविद्यालय, मीरघाट, काशी, इत्यस्याध्यक्षेण
आचार्यश्रीराजनारायणशास्त्रिशुक्लमहोदयेन सम्पादिता ।

———

प्रकाशकः—
मास्टर खेलाड़ीलाल ऐण्ड सन्स
संस्कृत बुकडिपो,
कचौड़ीगली, बनारस सिटी ।

—:०:—



—❀—

मूल्यम् ।)

——






माननीया विद्वांसः !

अयमेकोऽवच्छेदकत्वनिरुक्तिनामा नव्यन्यायेषु व्याप्तिवादे श्रेष्ठतमः ग्रन्थो दीधितिकृतैव सिद्धान्तलक्षणमवलम्ब्य विनिर्मितः। अस्याऽप्रकाश्यमपि संक्षिप्तदीधितिरहस्यं प्रकाशीकुर्वतः श्रीमतो जगदीशतर्कालङ्कारमहोदयस्य टीकारजनी कठिनतातमसावृता जनताकाशेऽशोभमानैव विराजते। अस्या एव विवृतिनामिका कौमुदीव टीका सुतरां मया विरचिता। अस्या अपराऽपि मनोरमानामिका काचित् टीका मया विनिर्मिता।

आभ्यां यदि नव्यन्यायाध्ययनं विदधतः कस्यापि समुपकारो भवेत्, तदा कृतकृत्योऽहं भविष्यामीति मन्ये। यद्यपि गदाधरकृता मथुरानाथतर्कवागीशादिकृताप्यस्य ग्रन्थस्य टीका वर्त्तते तथापि निरुक्ततर्कालङ्कारकृताया एव टीकाया विशिष्टशिष्टैरादरणीयतया तत्रैव मे प्रवृत्तिर्भवद्भिर्विवेचनीया। श्रीमतस्तर्कालङ्कारमहाशयस्य टीकालेखसमयस्तु निम्नलिखितश्लोकतः श्रीमद्भिरवगन्तव्यः।

रन्ध्रान्तबाणेन्दुगते शकाब्दे, सिंहे रवौ मन्ददिने दशम्याम्।
प्रयत्नतः श्रीजगदीशशर्मणा, कृतं समाप्तं निजपुस्तकञ्च॥

अयं हि श्लोको जगदीशभट्टाचार्यस्य स्वहस्तलिखितज्योतिस्तत्त्व-

नामकग्रन्थशेषे वर्त्तमानः श्रीमतो विदुषः श्यामाकान्ततर्कपञ्चाननमहाशयस्य समीपे मया समुपलब्धः। निरुक्तश्लोकेन सार्द्धद्विशताधिकवर्ष एव तस्य पाण्डित्यप्रकाशसमय इति विज्ञायते। अनेके नाम ग्रन्थाः श्रीमता तर्कालङ्कारेण विनिर्मिताः, तस्योपकारः कदाचिदपि नोपेक्षणीयः, स तु भारतविख्यात एव सर्वसम्मतः स्वलेखप्रकाशीकृतातुलविद्यः पण्डितप्रवरः समासीदित्यत्र नास्ति सन्देह इति विज्ञायते।

अस्य ग्रन्थस्य हस्तलिखितं क्रोडपत्रं मया श्रीमतोऽनन्तविद्यस्य श्यामाकान्ततर्कपञ्चाननमहाशयस्य समीपे प्राप्तं प्रायस्तदाश्रित्यैव मनोरमानामिका टीका मया विरचितेति तेनाहं समुपकृत इत्यलमधिकेन।

गुरुपूर्णिमा
वै० स० २००५

निवेदकः—
श्रीवामाचरणभट्टाचार्यः

जागदीशी-विवृति-मनोरमाऽऽख्यटीकात्रयालङ्कृता-

# अवच्छेदकत्वनिरुक्तिः ।

## रघुनाथशिरोमणिकृताऽवच्छेदकत्वनिरुक्तिदीधितिः ।

नन्ववच्छेदकत्वमिह न स्वरूपसम्बन्धविशेषः, सम्भवति च लघौ धर्मे गुरौ तदभावात्, प्रमेयधूमत्व-कम्बुग्रीवादिमत्त्व-घ्राणग्राह्यगुणत्वादेरतथात्वेन तेन रूपेण साध्यतायां व्यभिचारिण्यतिप्रसङ्गात् ।

---

❀ श्रीजगदीशतर्कालङ्कारकृताऽवच्छेदकत्वनिरुक्तिप्रकरणव्याख्या ❀

**नन्विति ।** इह अनवच्छेदकत्वमित्यत्र, 'अवच्छेदकत्वम्' अवच्छेदकत्वपदार्थः ।

---

❀ श्रीवामाचरणभट्टाचार्यकृता विवृतिः ❀

ॐ नमो गणेशाय—

भालप्रसाधनविधूज्ज्वलमञ्जुलाङ्गं,
कान्तं प्रशान्तवदनं ससमाधिमीशम् ।
यं वीक्ष्य सुन्दरतनुं गिरिजाऽऽलिलिङ्गे,
तं दुर्गया सह महेशमहं स्मरामि ॥ १ ॥

ततोऽवच्छेदकत्वस्य निरुक्तेर्विवृतिर्मया ।
क्रियते धीमतामर्थे वामाचरणशर्मणा ॥ २ ॥

---

❀ मनोरमा ❀

प्रभूतभूतचीत्कारे भीतयेवास्थिरश्रिया ।
चिरमालिङ्गितो देव्या सदा पातु सदाशिवः ॥ १ ॥
गुरुवास्यपयःपानम्, विधायेयं मनोरमा ।
क्रियते धीनता श्रीमद्वामाचरणशर्मणा ॥ २ ॥

गुरुधर्मस्य प्रतियोगितानवच्छेदकत्ववादिनां प्राचीनानां मते प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वादिघटितलक्षणे प्रमेयधूमत्वादिगुरुधर्मेण साध्यतायां व्यभिचारिणि वह्न्यादावव्याप्तिः, प्रमेयधूमाभावस्य हेतुसमानाधिकरणत्वेऽपि तदीयप्रतियोगितावच्छेदकताया धूमत्वे कल्पनीयतया तदभावस्य साध्यतावच्छेदकप्रमेयधूमत्वे सत्त्वात्।

न च तादृशप्रतियोगितानवच्छेदकीभूतं साध्यतावच्छेदकमभावप्रतियोगितावच्छेदकत्वेन विशेषणीयम्, प्रमेयधूमत्वादेरतथात्वेन न तेन रूपेण साध्यतायामतिव्याप्तिरिति वाच्यम्? प्रमेयधूमत्वादेरपि विषयित्वसम्बन्धावच्छिन्नाभावप्रतियोगितावच्छदेकत्वात्। न हि तेन सम्बन्धेन प्रमेयधूमाभावप्रतियोगितावच्छेदकत्वम् धूमत्वे कल्पयितुं शक्यते, धूमज्ञानेऽपि विषयितया धूमो नास्तीति प्रत्ययापत्तेः।

साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वविवक्षणे वाच्यम् ज्ञेयत्वात्, प्रमेयवह्निमान् धूमादित्यादावव्याप्तिरित्याशङ्कते दीधितौ **नन्विति**।

---

**नन्ववच्छदेकत्वमिह** नेत्यादिदीधितिः। अथ यदि एतल्लक्षणघटकीभूतमवच्छेदकत्वम् स्वरूपसम्बन्धभिन्नमित्युच्यते तदा बाधापत्तिः, हेतुतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वस्यापि पक्षान्तर्गततया तत्र स्वरूपसम्बन्धभेदरूपसाध्यस्यासत्त्वात्। न चैतल्लक्षणघटकीभूतानवच्छेदकत्वघटकीभूतमवच्छेदकत्वम् स्वरूपसम्बन्धभिन्नमित्युक्तौ न कोऽपि दोष इति वाच्यम्? तादृशपक्षीभूतावच्छेदकत्वस्य स्वरूपसम्बन्धात्मकत्वे बाधापत्तेः, अनतिरिक्तवृत्तित्वरूपत्वे सिद्धसाधनापत्तेः। नापि तादृश एव पक्षे एतल्लक्षणघटकत्वाभावस्य साध्यत्वं वक्तुं शक्यते, पूर्वोक्तदूषणगणग्रासादिति चेन्न? स्वरूपसम्बन्धरूपावच्छेदकत्वम्, वाक्यात्मकैतल्लक्षणघटकीभूतसाध्यतावच्छेदकविशेषत्वाक्रान्ताभावप्रतियोग्यवच्छेदकत्वशब्दप्रतिपाद्यत्वाभाववत् अतिप्रसङ्गात् इत्यस्य वक्तव्यतया दोषासम्भवात्। अतिप्रसङ्गस्य हेतुत्वञ्च सम्पादकतासम्बन्धेन बोध्यमिति ध्येयम्। अथवा एतल्लक्षणघटकीभूतानवच्छेदकत्वघटकीभूतावच्छेदकत्वशब्दप्रतिपाद्यः स्वरूपसम्बन्धरूपावच्छेदकत्वं भवितुं नार्हति, लघुधर्मधर्मिकस्वरूपसम्बन्धरूपावच्छेदकत्वप्रयोज्य—गुरुधर्मधर्मिकत्वरूपसम्बन्धरूपावच्छेदकत्वाभावप्रयोज्यव्यभिचारिस्थलवृत्तिहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदक—साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यात्, इत्युक्तावपि दोषासम्भवात्। तादृश-

विशिष्टसत्तात्वसमनियतस्य सत्तात्वस्य लघुनोऽपि न विशिष्टाभा-

---

अवच्छेदकत्वम्=अवच्छेदकत्वशब्दप्रतिपाद्यम् । इह=एतल्लक्षणे, घटकत्वं सप्तम्यर्थः । अन्वयश्चास्यावच्छेदकत्वमित्यनेन । तथा च निरुक्तसिद्धान्तलक्षणघटकसाध्यतावच्छेदकविशेषणीभूताभावप्रतियोग्यव-च्छेदकत्वशब्दप्रतिपाद्यमित्यर्थः पर्यवसितः ।

तादृशमवच्छेदकत्वशब्दप्रतिपाद्यम् किं स्वरूपसम्बन्धविशेषरूपमन-तिरिक्तवृत्तित्वरूपं वेति नन्वित्यादिना वितर्क्य प्रथमपक्षं दूषयति **न स्वरूपसम्बन्धविशेष इति** । स्वरूपसम्बन्धविशेषत्वाभाववदित्यर्थः । निरुक्ताभावे सम्पादकतासम्बन्धेन अतिप्रसङ्गो हेतुः । अतिप्रसङ्गे हेतुमाह **सम्भवतीति** । लघुधर्मे स्वरूपसम्बन्धरूपावच्छेदकत्वे सम्भवति सती-त्यर्थः । गुरौ=गुरुधर्मे । तदभावात्=स्वरूपसम्बन्धविशेषावच्छेद-कत्वाभावात् । तथा च भवति प्रमेयधूमवान् वह्नेरित्यादावतिव्याप्तिरिति भावः ।

**टीकायामिहेत्यादि** । सिद्धान्तलक्षणघटकानवच्छेदकत्वप्रतियो-ग्यवच्छेदकत्वम् अवच्छेदकत्वशब्दप्रतिपाद्यमित्यर्थः ।

गुरुधर्मसमनियतलघुधर्मेऽभावप्रतियोगितावच्छेदकत्वमङ्गीकुर्वतां भवानन्दतर्कवागीशानां मतं दूषयितुमुपन्यस्यति **विशिष्टेति** । विशिष्ट-

---

सामानाधिकरण्यस्य हेतुत्वञ्च स्वनिरूपकाधिकरणनिरूपितवृत्तितावच्छेदकसाध्यता-वच्छेदकवृत्त्यभावप्रतियोगित्वसम्बन्धेन । केचित्तु स्वरूपसम्बन्धरूपावच्छेदकत्वम्, शब्दात्मकैतल्लक्षणघटकानवच्छेदकत्वघटकावच्छेदकत्वशब्दप्रतिपाद्यत्वाभाववत् व्य-भिचारिहेतुमत्त्वात् । तादृशहेतुमत्त्वञ्च स्वविशिष्टप्रतियोगितावत्त्वसम्बन्धेन । स्ववैशिष्ट्यं प्रतियोगितायां स्वनिष्ठसामानाधिकरण्यनिरूपकतावच्छेदकसाध्यतावच्छेदकवृत्त्यभावी-यत्व-स्वसमानाधिकरणाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नत्वोभयसम्बन्धेनेत्याहुः ।

**लघाविति** । तद्धर्मवृत्तित्वमेव तद्धर्मापेक्षया लघुत्वम् । वृत्तित्वञ्च स्वविषयकग्रह-त्वव्यापकसंख्यात्वावच्छिन्नावृत्तिसंख्याविभाजकीभूतधर्मवत्त्वसम्बन्धेन । **गुराविति** । गुरुत्वञ्च तद्विषयकग्रहत्वव्यापकसंख्यात्वावच्छिन्नावृत्तिसंख्याविभाजकीभूतधर्मवत्त्व-मेव वाच्यम् । व्यापकताघटकसम्बन्धश्च स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छे-दकताकविषयताकत्त्वम् । धर्मवत्त्वञ्च स्वाश्रयाश्रयत्वसम्बन्धेन बोध्यम् ।

**टीकायां विशिष्टसत्तात्वेति** । अत्र समनियतत्वं व्याप्यत्वे सति व्यापकत्वम् ।

वस्यप्रतियोगितावच्छेदकत्वम्; गुणादावपि सत्ता नास्तीति **प्रतीतिप्र-**

---

सत्तात्वरूपगुरुधर्मसमनियतस्येत्यर्थः। अत्र समनियतत्वं स्वव्यापक-गुरुधर्मव्यापकत्वम्, स्वाश्रयनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकगुरु-धर्माश्रयनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वरूपं वाच्यम्। न तु गुरुधर्माभाववदवृत्तित्वे सति तादृशधर्मव्यापकत्वरूपं तत्। तथा सति समवायेन प्रमेयत्वप्रकारकज्ञानविशेष्याभावप्रतियोगितावच्छेदकतायाः प्रमेयत्वे कल्पनानुपपत्तिः स्यात्, प्रमेयत्वप्रकारकज्ञानविशेष्यत्वाभावस्या-प्रसिद्धत्वात्। न चैवं द्रव्यान्यासमवेतत्वस्य द्रव्यत्वाभावप्रतियोगिता-वच्छेदकत्वं न स्यात् द्रव्यत्वत्वस्य द्रव्यान्यासमवेतत्वाव्यापकत्वादिति वाच्यम्, इष्टत्वात्। भवन्मतेऽपि तादृशानुपपत्तेर्वारयितुमशक्यतया द्रव्यत्वत्व एव तादृशाभावप्रतियोगितावच्छेदकतायाः कल्पनीयत्वादिति ध्येयम्। अत्र स्वपदं लघुधर्मपरम्, स्वाश्रयत्वञ्च येन सम्बन्धेन गुरु-धर्माश्रये लघुधर्मस्य वृत्तित्वं तेन सम्बन्धेन बोध्यम्। व्यापकत्वमपि येन सम्बन्धेन लघुधर्माश्रये गुरुधर्मस्य वृत्तित्वं तेनैव सम्बन्धेनेत्यवधेयम्।

**लघुनोऽपीति।** लघुत्वं गुरुत्वञ्चान्यत्र विवेचनीयमेवानुस-न्धेयम्। न विशिष्टाभावस्य=न विशिष्टसत्ता नास्तीत्याकारकाभावस्य। **प्रतियोगितावच्छेदकत्वमिति।** सत्तात्वस्येति पूर्वेणान्वयः।

**गुणादावपीति।** आदिना कर्मपरिग्रहः। **प्रत्ययप्रसङ्गादिति।** तथा च सत्तात्वं यदि विशिष्टसत्ताभावप्रतियोगितावच्छेदकं स्यात् तदा गुण-वृत्त्यभावप्रतियोगितावच्छेदकमपि स्यादित्यापत्तौ तात्पर्यमिति भावः।

---

व्याप्यत्वदलानुक्तौ समवायेन घटरूपं नास्तीत्यभावप्रतियोगितावच्छेदकतायाः रूपत्वे आपत्तिः स्यात्, घटरूपत्वव्यापकत्वस्य रूपत्वे सत्त्वात्। न चेष्टापत्तिः? पटेऽपि रूपं नास्तीति प्रत्ययापत्तेः। व्यापकत्वदलानुक्तौ संयोगेन द्रव्याभावप्रतियोगितावच्छे-दकताया घटत्वे आपत्तिः, घटत्वस्य द्रव्यत्वव्याप्यत्वात्। न चेष्टापत्तिः? पटसंयोगवति घटो नास्तीति प्रत्ययानुपपत्तेरिति ध्येयम्। **गुणादावपि सत्ता नास्तीति।** ननु स्व-प्रतियोगितावच्छेदकावच्छिन्नाधिकरणतया सहात्यन्ताभावस्य विरोधित्वनियमात् विशि-ष्टसत्ताभावप्रतियोगितावच्छेदकीभूतसत्तात्वावच्छिन्नाधिकरणताया गुणे सत्त्वात् कथं गुणेऽपि सत्ता नास्तीति प्रत्ययापत्तिरिति ग्रन्थः सङ्गच्छते? कथं वा गुणे विशिष्टसत्ता नास्तीति प्रत्ययानुपपत्तिर्नाभिहिता जगदीशेन। यदि च विशिष्टसत्ताभावसत्ताभावयोः

सङ्गात् । पृथिवीसमवेतत्वासमनियतस्यापि च समवेतत्वस्य पृथिवी-समवेताभावप्रतियोगितावच्छेदकत्वम्, अनतिप्रसङ्गात् । एवं घटरूप-

---

गुरुधर्मसमनियतलघुधर्मे प्रतियोगितावच्छेदकत्वापत्तिं प्रदर्श्य गुरु-धर्मासमनियतलघुधर्मे प्रतियोगितावच्छेदकत्वाभावप्रसङ्गमपि दर्शयति **पृथिवीति**। पृथिवीनिरूपितत्वोपलक्षितं यत् समवेतं तादृशसमवेतत्वस्ये-त्यर्थः। न तु पृथिवीनिरूपितत्वविशिष्टसमवेतत्वस्येत्यर्थः। जलादावपि समवेतं नास्तीति प्रत्ययापत्तिभिया समवेतत्वमात्रे विशिष्टसमवेताऽभाव-प्रतियोगितावच्छेदकतायाः कल्पयितुमशक्यतया अग्रिमग्रन्थाऽसङ्गतेः।

**असमनियतस्येति**। समवेतत्वस्य जलत्वादावपि सत्त्वेन तत्र पृथि-वीनिरूपितत्वोपलक्षितसमवेतत्वस्यासत्त्वात् समवेतत्वं न पृथिवीनिरू-पितत्वोपलक्षितसमवेतत्वसमनियतमिति भावः।

अनतिप्रसङ्गात् = आपत्त्यनुपपत्त्यसम्भवात् । ननु अभावप्रति-योगितावच्छेदककोटावुपलक्षितधर्मस्य भानाभ्युपगमे अभावप्रत्ययो: हीत्यादिनियमानुपपत्तिरत आह **एवमिति**। घटरूपत्वस्य = घटवृत्तित्व-

---

प्रतियोगितावच्छेदकैक्यात् तादृशाभावयोरप्यैक्यमिति विशिष्टसत्तात्वावच्छिन्नाधि-करणतया सहैव तादृशाभावयोर्विरोधित्व कल्पनीयम्, तथा च न कोऽपि दोष इत्युच्यते, तदा द्रव्ये गुणवृत्तित्वविशिष्टसत्ता नास्तीति प्रत्ययानुपपत्तिः स्यात् इति चेदत्र केचित्—घटत्वादिविशिष्टसत्ताद्यभावस्य पटादौ विशिष्टसत्ताद्यभावस्य गुणादौ असत्त्वापत्तिभिया विशिष्टसत्ताद्यभावस्य विरोधित्वमेव न कल्प्यते, इति सत्तात्वावच्छिन्नप्रतियोगिताका-भावस्य सर्वत्र विद्यमानतया गुणेऽपि सत्ता नास्तीति प्रत्ययापत्तिः स्यादित्युक्तं जगदी-शेनेत्याहुः। अन्ये तु–सत्तात्वं यदि विशिष्टसत्ताभावप्रतियोगितावच्छेदकं स्यात् तदा गुणवृत्त्यभावीयप्रतियोगितावच्छेदकमपि स्यात्। इष्टापत्तौ यो यद्वृत्त्यभावीयप्रति-योगितावच्छेदकतावान् स्यात् स तद्वृत्त्यभावीयप्रतियोगितावच्छेदकत्वविशिष्टत्वे सति तद्वृत्त्यभावीयप्रतियोगित्वसम्बन्धावच्छिन्नाधेयतावच्छेदकतावान् स्यादिति व्याप्तया सत्तात्वं यदि विशिष्टसत्ताभावप्रतियोगितावच्छेदकं तदा गुणकर्मान्यत्वविशिष्टसत्ताभावी-यप्रतियोगित्वसम्बन्धावच्छिन्नाधेयतावच्छेदकत्वस्य विशिष्टसत्तात्व एव सत्त्वात् गुणे सत्ता नास्तीति प्रतीतिप्रसङ्गः। यो यदभावप्रतियोगितावच्छेदकावच्छिन्नाधिकरणतावान् भवति स तदभावीयप्रतियोगित्वसम्बन्धावच्छिन्नाधेयतावच्छेदकावच्छिन्नाधिकरणता-वान् भवतीति व्याप्तया गुणे विशिष्टसत्ताऽस्तीति प्रतीत्यापत्तिरपि भवतीत्याहुः।

त्वस्यासमनियतमपि रूपत्वं व्यधिकरणसंयोगादिसम्बन्धावच्छिन्नघटरूपाद्यभावस्य प्रतियोगितावच्छेदकमतः समनैयत्यमकिञ्चित्करम् । यस्यावच्छेदकत्वस्वीकारे अतिप्रसङ्गाद्यभावः स एवावच्छेदक इत्याशयेनाह सम्भवतीति । अतिप्रसङ्गाद्यनापादके लघौ धर्मे सम्भवतीत्यर्थः ।

---

विशिष्टरूपत्वस्य । असमनियतमपीति । रूपत्ववति पटरूपे घटरूपत्वस्यावर्त्तमानत्वात् रूपत्वस्य घटरूपत्वासमनियतत्वमिति हृदयम् । समानाधिकरणसमवायावच्छिन्नघटरूपाभावप्रतियोगितावच्छेदकत्वन्तु रूपत्वे न सम्भवति, पटे रूपं नास्तीति प्रत्ययापत्तेरतः व्यधिकरणेति । तथा च व्यधिकरणसंयोगेन घटरूपं नास्तीत्यभावस्य प्रतियोगितावच्छेदकत्वं रूपत्व एव लाघवात् कल्पनीयम्, संयोगेन घटरूपाभावस्य केवलान्वयित्ववत् संयोगेन रूपाभावस्यापि केवलान्वयितया उभयोः सर्वत्र सत्त्वेन अतिप्रसङ्गाद्यभावात् । भवन्मते तु रूपत्वं तादृशघटरूपाभावप्रतियोगितावच्छेदकं न स्यात्, रूपत्वस्य घटरूपत्वासमनियतत्वादिति भावः । अकिञ्चित्करमिति । असमनियतेऽपि लघुधर्मे यदि प्रतियोगितावच्छेदकत्वं सर्वसम्मतं तदा लघुधर्मनिष्ठप्रतियोगितावच्छेदकतायां समनियतत्वमप्रयोजकमेवेति तत्त्वम् । नन्वेवं लघुधर्मे प्रतियोगितावच्छेदकतायां किं प्रयोजकमित्यत आह यस्येति । यस्य यादृशस्य वा लघुधर्मस्येत्यर्थः । अवच्छेदकत्वस्वीकार इति । गुरुधर्मा-

---

ननु समनियतलघुधर्मस्यैव प्रतियोगितावच्छेदकत्वमिति भवानन्दतर्कवागीशमतमेव समीचीनम्, तथाहि तन्मते धर्मविशिष्टत्वमेव समनियतत्वम्, वैशिष्ट्यं स्वावच्छिन्नाधिकरणतावद्वृत्त्यभावप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्व-स्ववृत्तित्वोभयसम्बन्धेन । वृत्तित्वमपि तेनैव सम्बन्धेन । तथा च घटरूपत्वादिसमनियतत्वमपि रूपत्वादौ वर्त्तत एवेति चेन्न, वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वे निरुक्तसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभावाप्रसिद्धेरिति ध्येयम् ।

अतिप्रसङ्गाद्यनापादके लघौ धर्मे इति । अत्र धर्मपदं प्रतियोगितासमानाधिकरणलघुधर्मस्यैव प्रतियोगितावच्छेदकत्वलाभार्थम्, तेन द्रव्यत्वत्वस्य न विशिष्टसत्ताभावप्रतियोगितावच्छेदकत्वम् । अतिप्रसङ्गाद्यनापादकत्वञ्च अभावविशिष्टाभाव-

प्रमेयधूमत्वस्य तादृशप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणधूमत्वानतिरेकादाह कम्बुग्रीवेति । न च कम्बुग्रीवादिमत्त्वं कम्बुग्रीवादिविषय-

श्रयमात्रनिष्ठप्रतियोगितेत्यादिः । अतिप्रसङ्गाद्यनवतारः = आपत्त्यनुपपत्त्यभावः । स एव = तादृशलघुधर्म एव, अवच्छेदकः = गुरुधर्माश्रयनिष्ठप्रतियोगिताया अवच्छेदकः । अतिप्रसङ्गाद्यनापादके=आपत्त्याद्यनापादके ।

तादृशेति । प्रतियोगिव्यधिकरणहेतुसमानाधकरणाभावप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणधूमत्वाभिन्नत्वादित्यर्थः ।

न चेति । वाच्यमिति परेणान्वयः । कम्बुग्रीवादिमत्त्वमिति ।

प्रतियोगितावच्छेदकत्वम् । वैशिष्ट्यम् स्वाधिकरणवृत्तिभेदप्रतियोगितानवच्छेदकत्वस्ववृत्तित्वोभयसम्बन्धेन । स्ववृत्तित्वमपि तेनैव सम्बन्धेन बोध्यम् ।

प्रमेयधूमत्वस्येत्यादि । न च धूमत्वस्य हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वेऽपि प्रमेयत्वस्य तादृशप्रतियोगितानवच्छेदकतया प्रमेयत्वावच्छिन्नविधेयताकानुमितिर्भवत्येव, यादृशधर्मे प्रतियोगितानवच्छेदकत्व तादृशधर्मावच्छिन्नविधेयताकानुमितेरेव फलत्वादिति प्रथमत आशङ्कैव नोदेतीति वाच्यम्? यादृशधर्मावच्छेदेन हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वाभावः तादृशधर्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविधेयताकानुमितेरेव फलत्वात् एकवृत्तिपदार्थाभावस्य व्यासज्यवृत्तिधर्मावच्छेदेन स्वीकरणीयतया प्रमेयत्वधूमत्वगतद्वित्वावच्छेदेन तादृशप्रतियोगितावच्छेदकत्वाभावसत्त्वादतिव्याप्तेः सङ्गमनीयत्वात् । व्यासज्यवृत्तिधर्मावच्छेदेनैकदेशवृत्तिपदार्थाभावानभ्युपगन्तृमते एवातिव्याप्तेर्वारणीयत्वादिति ध्येयम् ।

कम्बुग्रीवेतीति । ननु कपालद्वयसंयोगरूपाः कम्बुग्रीवाः, तासाञ्च नानात्वेन न हेतुसमानाधिकरणकम्बुग्रीवादिमदभावप्रतियोगितावच्छेदकत्वमपि तु लाघवात् घटत्वस्यैव तथात्वमिति भवत्यतिव्याप्तिरित्यर्थस्तु न सङ्गच्छते । यथा दण्डे रक्तताशून्यतादशायां रक्तदण्डाश्रयेऽपि पुरुषे रक्तदण्डो नास्तीति प्रतीतिर्जायते विशेषणशून्यकालावच्छेदेन तत्तद्विशेषणविशिष्टाभावस्य विशेष्यवति सर्वसम्मतत्वात्; तथा यत्र कपालसंयोगनाशात् घटनाशो जातस्तत्र कपालद्वयसंयोगनाशक्षणावच्छेदेन घटवद्देशेऽपि कम्बुग्रीवादिमान्नास्तीति प्रत्ययात् घटत्वं न तादृशाभावप्रतियोगितावच्छेदकं भवितुमर्हति, घटाधिकरणतायास्तदानीमपि तत्र सत्त्वेन घटत्वस्यातिप्रसङ्गाद्यनापादकत्वासम्भवात् घटत्वस्य कम्बुग्रीवादिमदभावप्रतियोगितावच्छेदकत्वाभिधानस्यासङ्गतत्वापत्तेरिति चेन्न? कम्बुग्रीवावतः कालिकेन साध्यत्वेऽतिव्याप्तिसङ्गतिसम्भवात् ।

क्तिरेव, सा च प्रत्येकं हेतुमन्निष्ठाभावप्रतियोगितावच्छेदिकैवेति कुतोऽति-व्याप्तिरिति वाच्यम् ? परम्परया संस्थानगतकम्बुग्रीवात्वादिजाति-

साध्यतावच्छेदकीभूतमित्यादिः। कम्बुग्रीवादिव्यक्तिरेव=कपालद्वयसंयोग-रूपनानाव्यक्तिरेव। एवकारादेकव्यक्तेः साध्यतावच्छेदकत्वव्यवच्छेदः। सा च=कम्बुग्रीवाव्यक्तिश्च। प्रत्येकमित्यादि। तथा च कम्बुग्रीवा-दिमत्त्वान् द्रव्यत्वादित्यादौ नातिव्याप्तिः सम्भवति, हेतुमति द्रव्यत्वाधि-करणे तत्कम्बुग्रीवादिमान्नास्ति तत्कम्बुग्रीवादिमान्नास्तीत्याद्याकारका-भावीयप्रतियोगितावच्छेदकतायाः साध्यतावच्छेदकीभूतायां तत्तत्कम्बु-ग्रीवादिव्यक्तौ सर्वत्र सत्त्वात्। नहि तत्तत्कम्बुग्रीवादिमदभावप्रति-योगितावच्छेदकत्वमपि घटत्वे कल्पयितुं शक्यते, तत्कम्बुग्रीवादिमदभा-वस्य घटान्तरवति वर्त्तमानतया घटवत्यपि घटो नास्तीति प्रत्ययापत्तेरिति भावः। उक्तस्थलेऽतिव्याप्तिं संगमयति परम्परयेति। स्वाश्रयसमवायि-समवेतत्वरूपपरम्परासम्बन्धेनेत्यर्थः। स्वं कम्बुग्रीवात्वम्। संस्थानेति।

कालिकेन कम्बुग्रीवावदभावप्रतियोगितावच्छेदकतायाः घटत्व एव कल्पयितुं शक्य-त्वात्, कपालद्वयसंयोगनाशक्षणेऽपि कालिकेन कम्बुग्रीवावतः सत्त्वादिति वदन्ति।

न च कम्बुग्रीवादिमत्त्वमिति। न च तत्तत्कम्बुग्रीवादिमदभावस्य साध्यता-वच्छेदकतावच्छेदकतदितरोभयावच्छिन्नावच्छेदकताकप्रतियोगिताकतया क्षणाऽघट-कत्वात् कथं तादृशाभावमादायातिव्याप्तिवारणमिति वाच्यम् ?; तद्व्यक्तिमान्नास्ति तद्व्यक्तिमान्नास्तीत्याद्याकारकाभावमादायैवातिव्याप्तेरभिहितत्वात्, तादृशाभावस्य लक्षणघटकत्वे बाधकाऽसम्भवात्। अथ तथापि तद्व्यक्तिमान्नास्तीत्याद्याकारका-भावीयप्रतियोगितावच्छेदकतायाः स्वाश्रयसमवेतत्वसम्बन्धेन कम्बुग्रीवादिरूपतत्तद्व्यक्तौ कल्पनामपेक्ष्य लाघवेन तद्घटनिष्ठतद्व्यक्तित्व एव कल्पयितुमुचितत्वात् कम्बुग्रीवात्वस्य साध्यतावच्छेदकत्वानुसरणं विफलमिति चेन्न, कम्बुग्रीवादिनाशक्षणे विशेषणविरहादेव विशिष्टाभावसत्त्वेन तादृशाभावप्रतियोगितावच्छेदकतायाः तद्घट-निष्ठतद्व्यक्तित्वे कल्पयितुमशक्यत्वात् तस्य अतिप्रसङ्गाघनाशकत्वविरहादिति ध्येयम्।

मत्त्वस्यैव साध्यतावच्छेदकत्वात् । तस्य च परम्परया अवच्छेदकत्वकल्पनामपेक्ष्य लाघवेन घटत्वस्यैव साक्षात तथात्वादिति भावः ।

ननु पृथिवीत्वतेजस्त्वादिना साङ्कर्यात् घटत्वं यदि नाना तदा

---

अवयवद्वयसंयोगनिष्ठकम्बुग्रीवात्वजातेरेवेत्यर्थः । साध्यतावच्छेदकत्वादिति । तत्तत्कम्बुग्रीवादिमदभावस्य हेतुमन्निष्ठत्वेऽपि तदीयप्रतियोगितावच्छेदकतायाः तत्तत्कम्बुग्रीवादिव्यक्तिनिष्ठाया अभावस्य साध्यतावच्छेदककम्बुग्रीवात्वजातौ वर्त्तमानतया भवति कम्बुग्रीवादिमत्त्वान् द्रव्यत्वादित्यादावतिव्याप्तिरिति हृदयम् ।

ननु स्वाश्रयसमवायिसमवेतत्वसम्बन्धेन कम्बुग्रीवात्ववान्नास्तीत्याकारकाभावस्यापि हेतुमन्निष्ठतया तदीयप्रतियोगितावच्छेदकत्वस्यैव साध्यतावच्छेदके कम्बुग्रीवात्वे सत्त्वात् कथमतिव्याप्तिरित्यत आह तस्येति । कम्बुग्रीवात्वस्येत्यर्थः । परम्परया = स्वाश्रयसमवायिसमवेतत्वसम्बन्धेन । साक्षात् = समवायात्मकसाक्षात्सम्बन्धेन । तथात्वादितीति । प्रतियोगितावच्छेदकत्वादित्यर्थः । तथा च कम्बुग्रीवात्ववदभावस्य हेतुमन्निष्ठस्य प्रतियोगितावच्छेदकत्वं न कम्बुग्रीवात्वे कल्पनीयम् अपि तु घटत्वे एव, समवायसम्बन्धापेक्षया तादृशस्वाश्रयसमवायिसमवेतत्वसंसर्गस्य गुरुतया गुरुसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताया अपि प्राचीनानामननुमतत्वात्, इति तादृशाभावप्रतियोगितावच्छेदकताया घटत्वनिष्ठाया अभावस्य साध्यतावच्छेदके कम्बुग्रीवात्वे विद्यमानतया भवत्यतिव्याप्तिरिति भावः ।

घ्राणग्राह्यगुणवान् द्रव्यत्वादित्यादितिस्थलान्तरेऽतिव्याप्त्यभिधानप्रयोजनं प्रदर्शयितुं शंकते नन्विति । पृथिवीत्वेति । पृथिवीत्वतेजस्त्वजात्यादिनेत्यर्थः । न्यूनताभङ्गाय पृथिवीत्वतेजस्त्वयोर्द्वयोरुपादानम् । आदिना पृथिव्यादिवृत्तित्वविशिष्टसत्तादिजातिपरिग्रहः । साङ्कर्यादिति । पृथिवीत्वाद्यव्यापकत्वे सति पृथिवीत्वाद्यव्यभिचारित्वे सति पृथिवीत्वादिसामानाधिकरण्यं सांकर्यम्, तस्मादित्यर्थः । जातित्वाभाववदिति तु पूरणीयम् ।

---

पृथिवीत्वतेजस्त्वादिनेति । ननु घटत्वस्य नानात्वे न साङ्कर्यं पृथिवीत्वादिसाङ्कर्ये च न घटत्वस्य नानात्वम् इति कथमुक्तग्रन्थः सङ्गच्छते इति चेन्न ? घटपदं

नैकमपि घटत्वं कम्बुग्रीवादिमत्त्वसमनियतमत आह घ्राणग्राह्येति ।

तदेकदेशे जातित्वाभावे पञ्चम्यर्थप्रयुक्तत्वस्यान्वयः । सांकर्यस्य जातिबाधकताया नव्यैरनभ्युपगमादाह यदीति । नाना=एकत्वाभाववत् । तथा च घटत्वं नाना पृथिवीत्वादिनिरूपिततादृशसांकर्यप्रयुक्तजातित्वाभाववत्त्वादिति तु समुदितार्थः पर्यवसितः । ननु घटत्वस्य नानात्वे प्रकृतोपयोगित्वं किमित्याकांक्षायामाह तदेति । नैकमपीत्यादि । पार्थिवघटत्वं तैजसघटत्वं वा नैकमपीत्यर्थः । कम्बुग्रीवेति । पूर्वोक्तसाध्यतावच्छेदकीभूतकम्बुग्रीवात्वसमनियतमित्यर्थः । तेन कम्बुग्रीवादिमत्त्वस्यापि नानात्वेन तत्तद्घटत्वस्य तत्तत्कम्बुग्रीवादिमत्त्वसमनियतत्वेऽपि न क्षतिरिति ध्येयम् । न च समनियतत्वस्याकिञ्चित्करतायाः पूर्वमुक्तत्वात् कथमत्राऽसमनियतत्वस्य घटत्वादौ प्रतियोगितावच्छेदकत्वाभावप्रयोजकत्वमभिहितमिति वाच्यम्? न कम्बुग्रीवादिमत्त्वसमनियतमित्यनेन "न कम्बुग्रीवादिमत्त्वादौ प्रतियोगितावच्छेदकत्वाभावसिद्धौ अतिप्रसंगाद्यनापादक"मित्यस्यागत्या विवक्षणीयतयैव ग्रन्थसंगमनसम्भवादित्यवधेयम् । एवञ्च न कम्बुग्रीवादिमत्त्वान् द्रव्यत्वादित्यादावतिव्याप्तिः, प्रतियोगिव्यधिकरणहेतुमन्निष्ठकम्बुग्रीवादिमदभावप्रतियोगितावच्छेदकताया घटत्वादौ घटवत्यपि कम्बुग्रीवादिमान्नास्तीति प्रत्ययापत्तिभिया कल्पयितुमशक्यत्वादतः स्थलान्तरे घ्राणग्राह्यगुणवान् द्रव्यत्वादित्यादौ अतिव्याप्तिरभिहिता दीधितिकृतेत्याशयः ।

घ्राणग्राह्यगुणवान् द्रव्यत्वादित्यादौ द्रव्यत्ववति वर्त्तमानस्य घ्राणग्राह्यगुणाभावप्रतियोगितावच्छेदकत्वस्य लाघवात् ग्राह्यगन्धत्व एव कल्पनीयतया साध्यतावच्छेदके घ्राणग्राह्यगुणत्वे तादृशप्रतियोगितावच्छेदकत्वाभावस्य सत्त्वादतिव्याप्तिः स्यात्, यदि साध्यतावच्छेदकविशेषणीभूताभावप्रतियोग्यवच्छेदकत्वं स्वरूपसम्बन्धरूपं स्यादित्याह घ्राणग्राह्यगुणत्वेति । घ्राणेन्द्रियजन्यलौकिकप्रत्यक्षविषयीभूतगुणत्वापेक्ष-

---

स्वशक्यतावच्छेदकवृत्तिभेदप्रतियोगिस्वशक्यतावच्छेदकम् पृथिवीत्वादिविशिष्टधर्मकत्वात्, वैशिष्ट्यम्, स्वसामानाधिकरण्य स्वाभाववद्वृत्तित्व स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वैतत्त्रितयसम्बन्धेनेति केचित् तन्न ? पृथिवीत्वविशिष्टधर्मकत्वस्य हेतुत्वे दृष्टान्तासिद्ध्यापत्तेः । वस्तुतो घटत्वं यदि एकत्ववत् स्यात् तदा पृथिवीत्व-

घ्राणग्राह्यगुणत्वापेक्षया लघोर्ग्राह्यगन्धत्वस्यैव प्रतियोगितावच्छेदकत्वं बोध्यम्। (अन्यथा परमाणौ गन्धत्वेन सह घ्राणग्राह्यगुणत्वस्य समनियतत्वाभावात् गन्धत्वस्यैव प्रतियोगितावच्छेदकत्वाभावादिति भावः।)

अत्र घ्राणग्राह्यगुणत्वं घ्राणग्राह्यत्वे सति गुणत्वाव्यापकजातिमत्त्वम्, तेन गन्धत्वस्य लघोः समनैयत्ये तात्पर्यमित्यपि कश्चित्। अतथात्वेन=प्रतियोगितानवच्छेदकत्वेन, तेन रूपेण=प्रमेयधूमत्वादिरूपेण व्यभिचारिणि=प्रमेयत्वादौ [ सपक्षवृत्तिप्रमेयत्वादौ ] तेन विरुद्धे साध्यसामानाधिकरण्याभावादतिव्याप्त्यभावेऽपि न क्षतिः।

---

येत्यर्थः। **लघोरिति**। अतिप्रसंगाद्यनापादकस्येत्यादिः। ग्राह्यगन्धत्वस्यैव = लौकिकप्रत्यक्षविषयीभूतगन्धत्वस्यैव। एवकारात् गन्धत्वमात्रस्य प्रतियोगितावच्छेदकत्वव्यवच्छेदः। अन्यथा पार्थिवपरमाणावपि गन्धो नास्तीति प्रत्ययापत्तिः स्यात्, घ्राणग्राह्यगुणाभावस्य तत्र सत्त्वात्। घ्राणग्राह्यगुणाभावप्रतियोगितावच्छेदकत्वं गन्धत्व एव कल्पनीयम् नतु ग्राह्यगन्धत्वस्य तथात्वं, ग्राह्यगन्धत्वापेक्षया गन्धत्वस्यैव लघुत्वादिति चेत् परमाणावपि गन्धो नास्तीति प्रत्ययापत्तिः स्यात्, न स्यादित्याहात्रेति। घ्राणग्राह्यगुणवान् द्रव्यत्वादित्यादावित्यर्थः। घ्राणग्राह्यगुणत्वान्वयिघटकत्वं सप्तम्यर्थः। **घ्राणेति**। घ्राणेन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वे सतीत्यर्थः। **गुणत्वेति**। गुणनिष्ठभेदप्रतियोगितानवच्छेदकजातिमत्त्व-

---

निरूपितसाङ्कर्यप्रयुक्तजातित्वाभाववत् स्यात् इत्यापाद्याभावप्रयुक्तापादकाभावसिद्धौ तात्पर्यमिति युक्तमुक्तत्पश्यामः।

घ्राणग्राह्यत्वे सतीति। न च तादृशजातिमदभावप्रतियोगितावच्छेदकस्य सौरभत्वाऽसौरभत्वगन्धत्वादेर्भिन्नत्वस्य साध्यतावच्छेदकीभूतायां तादृशजातौ विरहात् कथमतिव्याप्तिः सम्भवतीति वाच्यम्? स्वग्राह्यगुणत्वाऽव्यापकजातिमत्त्वसम्बन्धेन घ्राणेन्द्रियवतः साध्यत्वोपगमादेवातिव्याप्तिसम्भवात् घ्राणेन्द्रियरूपसाध्यतावच्छेदके तादृशप्रतियोगितावच्छेदकीभूतसौरभत्वादिभिन्नत्वस्य सत्त्वात्। अथवैतद्दोषेणैव कश्चिदित्युक्तमिति ध्येयम्। केचित्तु जातिमत्त्वम् जात्यधिकरणत्वमिति न कोऽपि दोष इत्यपि वदन्ति।

नाऽप्यनतिरिक्तवृत्तित्वम्, प्रतियोगितायाः स्वरूपसम्बन्धा-

---

नापीति तादृशप्रतियोगितायास्तद्व्यक्तित्वावच्छिन्नाभाववदवृत्तित्व-मपि नेत्यर्थः । तेन तादृशप्रतियोगिताप्रतियोगिकाभाववदवृत्तितया धूमत्वादेरेवाच्छेदकत्वाभावादतिप्रसङ्गसम्भवात् स्वरूपसम्बन्धात्मिकायाः

---

मित्यर्थः । तेन = घ्राणग्राह्यगुणत्वस्य तादृशजातिस्वरूपत्वेन । समनैयत्ये तात्पर्यम् = अतिप्रसंगाद्यनापादकत्वे तात्पर्यम् । तथा चोक्तजात्यवच्छिन्नाधिकरणतायाः पार्थिवपरमाण्वादौ सर्वत्र सत्त्वेन तादृशजातिमदभावस्य कुत्रापि परमाणौ विरहान्न परमाणौ गन्धोनास्तीति प्रत्ययापत्तिरिति भावः । घ्राणेन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वविशिष्टाया गुणत्वाव्यापकजातेः गन्धत्वस्वरूपतया तस्याः हेतुमन्निष्ठतादृशजातिमदभावप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणगन्धत्वाभिन्नतया अतिव्याप्त्यभिधानमसंगतं स्यादित्यस्वरसः कश्चिदित्यनेन सूचित इति ध्येयम् ।

दीधितौ **नापीति** । प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगित्वाभाववदवर्त्तमानो यः धर्मः स पारिभाषिकावच्छेदकस्तद्भिन्नत्वं साध्यतावच्छेदके विवक्षणीयमिति-नापीत्यादेः समुदिततात्पर्यम् । वह्निमान् धूमादित्यादौ तादृशघटाभावप्रतियोगित्वाभाववदवर्त्तमानघटत्वभिन्नत्वस्य वह्नित्वे सत्त्वात् लक्षणसमन्वयः । प्रमेयधूमवान् वह्नेरित्यादौ तादृशप्रमेयधूमाभावप्रतियोगित्वाभाववति साध्यतावच्छेदकस्य प्रमेयधूमत्वस्याविद्यमानतया नातिव्याप्तिः । टीकायां **तादृशेति** । तादृशप्रतियोगितानिष्ठतत्तद्व्यक्तित्वावच्छिन्नाभाववदवृत्तित्वमित्यर्थः । तेन = तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावविवक्षणेन । तादृशेति । हेतुमन्निष्ठप्रतियोगिव्यधिकरणधूमाभावप्रतियोगित्वप्रतियोगिकतादृशप्रति-योगित्वघटोभयाभाववद्वृत्तितयेत्यर्थः । अतिप्रसंगसम्भवादिति । तथा च तादृशधूमनिष्ठप्रतियोगित्वप्रतियोगिकतादृशप्रतियोगित्वघटोभयाभाववदवृत्तिगगनादिभिन्नत्वस्य धूमत्वे सत्त्वात् भवति धूमवान् वह्नेरित्यादावतिव्याप्तिरिति भावः । **स्वरूपसम्बन्धात्मिकाया** इति । अतिव्याप्तिहेतुत्वेनाभिहिताया इत्यादिः ।

त्मिकायाः प्रतियोगितायाः प्रतिव्यक्ति भिन्नत्वेन धूमत्वादेरपि तद-

---

इत्यस्य न वैयर्थ्यम्, न वाऽग्रिमग्रन्थविरोध इति ध्येयम् ।

स्वरूपसम्बन्धात्मिकाया इति प्रतिव्यक्तिभिन्नत्वे हेतुः । तत्तदभावप्रतियोग्युभयस्वरूपाया इति तदर्थः । तत्तत्प्रतियोगिमात्रस्वरूपत्वे सामान्याभावविशेषाभावप्रतियोगितयोरविशेषापत्तेरिति ध्ये-

---

वैयर्थ्यमिति । यदि प्रतियोगिताप्रतियोगिकाभाववदवृत्तित्वं तादृशप्रतियोगितानतिरिक्तवृत्तित्वं तदा तादृशप्रतियोगिताप्रतियोगिकाभाववदवृत्तितयैव धूमत्वादेः पारिभाषिकानवच्छेदकत्वेन धूमवान् वह्नेरित्यादावतिव्याप्तिसंगमनसंभवे तत्रातिव्याप्तिसंगमनाय स्वरूपसम्बन्धात्मिकाया इत्यभिधानस्य व्यर्थता स्यादिति हृदयम् । ननु तादृशप्रतियोगितात्वावच्छिन्नाभाववदवृत्तित्वमेव तादृशप्रतियोगितानतिरिक्तवृत्तित्वमिति न स्वरूपसम्बन्धात्मिकाया इत्यस्य वैयर्थ्यमित्यत आह—न वेति । अग्रिमग्रन्थविरोधः=न चेत्याद्यग्रिमग्रन्थविरोधः । तथा च नाग्रिमलक्षणेन सह पौनरुक्त्यमिति भावः ।

प्रतिव्यक्तिभिन्नत्वे हेतुरिति । यतः प्रतियोगिता स्वरूपसम्बन्धात्मिका अत एव प्रत्येकव्यक्तिभिन्नेति पर्यवसितार्थः । यद्वा इयं प्रतियोगिता अवश्यं प्रतिव्यक्तिभिन्ना स्वरूपसम्बन्धात्मकत्वादित्यनुमाने तात्पर्यम् बोध्यम् । प्रतियोगितायाः स्वरूपसम्बन्धात्मकत्वे तस्याः किञ्चित्पदार्थस्वरूपत्वमवश्यं वाच्यमित्याह—तत्तदभावेति । तथा च घटाभावादिनिरूपिता प्रतियोगिता घटतदभावोभयरूपैवेति भावः । ननु घटाद्यभावप्रतियोगिताया लाघवात् घटादिरूपप्रतियोगिमात्रस्वरूपत्वमेव स्यादित्याह तत्तत्प्रतियोगीति । घटादिरूपप्रतियोगिमात्रस्वरूपत्वे इत्यर्थः । मात्रपदात् प्रतियोगितायास्तादृशोभयस्वरूपत्वव्यवच्छेदः । सामान्येति । घटादिसामान्याभावनीलघटादिविशेषाभावयोरित्यर्थः । अविशेषापत्ते-

---

अविशेषापत्तिरिति । ननु माभूत् प्रतियोगित्वं प्रतियोगिस्वरूपम्, तत्तदभावस्वरूपन्तु स्यात्, तथा च न सामान्याभावविशेषाभावप्रतियोगितायामविशेषापत्तिरिति चेन्न, समनियताभावयोरैक्याभ्युपगमे सङ्ख्याभावपरिमाणाभावप्रतियोगितयोरविशेषा-

तिरिक्तवृत्तित्वात्। न च तथाविधयत्किञ्चिदेकाभावप्रतियोगिता-
सामान्यशून्यावृत्तित्वं तत्,

---

यम्। धूमत्वादेरपीति। तथा च धूमवान् वह्नेरित्यादौ व्याप्तिलक्षणा-
तिव्याप्तिरिति भावः।

**न चेति** वाच्यमिति परेणान्वयः। तथाविधेति। यत्किञ्चित्पदं
व्याप्यवृत्तिसाध्यकस्थलीयलक्षणाभिप्रयेण, तथा च तथाविधो हेतु-

---

रिति। नीलघटादेर्घटाद्यभिन्नतया नीलघटाद्यभावप्रतियोगित्वं यदि नील-
घटाद्यात्मकं स्यात् तदा घटाद्यभावप्रतियोगित्वाभिन्नं स्यात्, न चेष्टा-
पत्तिरनुभवविरोधादित्याशयः। प्रतियोगितायाः प्रतिव्यक्तिभिन्नत्वे
धूमवान् वह्नेरित्यादौ व्याप्तिलक्षणस्यैवातिव्याप्तिरित्याह तथा चेति।
व्याप्तिलक्षणातिव्याप्तिरिति। वह्निमति वर्त्तमानस्य धूमाभावस्य तत्तद्
धूमनिष्ठप्रतियोगित्वाभाववति धूमान्तरे वर्त्तमानत्वात् धूमत्वस्य पारि-
भाषिकावच्छेदकत्वविरहेण भवत्यतिव्याप्तिरिति हृदयम्।

यत्किञ्चिच्चैकश्च यत्किञ्चिदेकौ, अभावश्च प्रतियोगिताचाभावप्रति-
योगिते, यत् किञ्चिदेके च ते अभावप्रतियोगितेइति व्युत्पत्त्या क्रमात्
यत्किञ्चित्त्वमभावविशेषणम्, एकत्वञ्च प्रतियोगिताविशेषणम्, तथा च
स्वनिरूपितप्रतियोगितावत्त्वसम्बन्धेन यत्किञ्चिदभावशून्यावृत्तित्वमेकं
लक्षणम्, अपरञ्च एकप्रतियोगिताशून्यावृत्तित्वमिति दीधितितात्पर्यमव-
लम्ब्य लक्षणद्वयं क्रमाद् व्याचष्टे यत्किञ्चित्पदमिति। व्याप्य-

---

पत्तेः, उभयस्वरूपत्वे तु न तदापत्तिः, सङ्ख्यापरिमाणयोर्भिन्नत्वात्। इदमत्रा-
वधेयम्। प्रतियोगिताया उभयस्वरूपत्वेऽपि संयोगेन द्रव्याभावस्य संयोगेन प्रमेया-
भावस्वरूपतया द्रव्यात्मकप्रतियोगिनोऽपि प्रमेयस्वरूपतया च तादृशाभावप्रतियोगि-
तयोरभेदापत्तिः। यदि द्रव्यभेदस्य प्रमेये सत्त्वात् न परस्परप्रतियोगिनोरैक्यसम्भव
इत्युच्यते, तदा सामान्याभावविशेषाभावप्रतियोगित्वयोरप्यविशेषापत्तिर्न सम्भवति
विशेषव्यक्तिभेदस्य सामान्यव्यक्तौ सत्त्वादिति चेत्? विशेषाभावप्रतियोगितात्वाव-
च्छेदेन सामान्याभावीयप्रतियोगिताया अभेदापत्तिर्दर्शितेति।

तथाविधेति दीधितिः। ननूक्तलक्षणे पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभाववान्
पटत्वात् इत्यादौ अव्याप्तिः, हेतुसमानाधिकरणघटाभावप्रतियोगितायाः पूर्वक्षणवृत्ति-

समानाधिकरणो यो यत्किञ्चिदभावस्तत्प्रतियोगितात्वावच्छिन्नाभाववद्-वृत्तित्वं तत्रार्थः । तथाविधाभावीयप्रतियोगितासामान्यशून्यत्वमप्रसिद्धम्, सर्वस्यैव वस्तुनस्तादृशयावत्त्वावच्छिन्नाभावप्रतियोगितावत्त्वादत उक्तम् यत्किञ्चिदिति ।

---

वृत्तीति । पूर्वोक्तव्याप्यवृत्त्यर्थकम् । तथाविधेत्यस्य व्याख्या हेतुसमानाधिकरणाविति । यत्किञ्चिदभावः = यावत्त्वाद्यनवच्छिन्नप्रतियोगिताकाभावः । तत्प्रतियोगितेति । तथा च तादृशयत्किञ्चिदभावप्रतियोगितात्वावच्छिन्नाभाववदवृत्तित्वं पारिभाषिकावच्छेदकत्वं तच्छून्य-साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतुनिष्ठं व्याप्येरितिव्याप्य-वृत्तिसाध्यकस्थलीयव्याप्तिलक्षणमिति भावः । उक्तलक्षणे अभावे यत्-किञ्चित्त्वविशेषणोपादानप्रयोजनमाह—तथाविधेति । हेतुसमानाधिक-रणाभावीयप्रतियोगितात्वावच्छिन्नप्रतियोगितकाभावोऽप्रसिद्ध इत्यर्थः । कथन्तानिवृत्त्यर्थमाह सर्वस्यैवेत्यादि । सकलपदार्थस्येत्यर्थः ।

तादृशेति । हेतुसमानाधिकरणो यो यावान्नास्तीत्याकारकोऽभाव-स्तत्प्रतियोगितावत्त्वादित्यर्थः । यत् किञ्चिदितीति । अव्याप्यवृत्ति-साध्यके वह्निमान् धूमादित्यादौ यावत्त्वावच्छिन्नाधिकरणाप्रसिद्धया प्रतियोगिवैयधिकरण्यविशेषणेनैव यावान्नास्तीत्यभाववारणसम्भवात्, अभावे यत्किञ्चित्त्वविशेषणानुपादाने व्याप्यवृत्तिसाध्यकस्थल एवाय-मात्मा ज्ञानादित्यादावव्याप्तिः, हेत्वधिकरणे आत्मनि वर्त्तमानस्य यावा-

---

त्वविशिष्टघटाभावाभावेऽपि वर्त्तमानतया तच्छून्याऽवृत्तित्वस्य साध्यतावच्छेदके पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावत्वे सत्त्वादिति चेन्न ? हेत्वधिकरणवृत्तिप्रतियोगिता-विशिष्टधर्मस्य पारिभाषिकावच्छेदकत्वोपगमात् । वृत्तित्वम् स्वावच्छेदकसम्बन्धावच्छि-न्नस्वावच्छेदकावच्छिन्नाधिकरणत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताक-भेदवत्त्वसम्बन्धेन । प्रतियोगितावैशिष्ट्यं धर्मे स्वनिष्ठप्रतियोगितात्वावच्छिन्नप्रति-योगिताकाभाववद्वृत्तित्वसंसर्गावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन । व्याप्यवृत्तिसाध्यकस्थलीयनिरुक्तलक्षणानुगमस्तु हेतुसमानाधिकरणाभावविशिष्टो धर्मः पारिभाषिकावच्छेदकः । वैशिष्ट्यम् स्वनिरूपितप्रतियोगितात्वावच्छिन्नाभाववद्वृत्ति-त्वसम्बन्धावच्छिन्न-स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन ।

नास्तीत्याकारकाभावस्य प्रतियोगितायाः सकलपदार्थ एव सत्त्वेन तच्छून्यत्वस्याप्रसिद्धत्वात्, यत्किञ्चित्पदोपादाने तु न तत्राव्याप्तिः, यत्किञ्चिदभावपदेन हेतुसमानाधिकरणयावत्त्वाद्यनवच्छिन्नप्रतियोगिताकाभावस्यैव विवक्षणीयतया तादृशघटाद्यभावप्रतियोगितासामान्यशून्यावृत्तिघटत्वादिभिन्नत्वस्य साध्यतावच्छेदके सत्त्वादित्याशयः।

ननु यत्किञ्चित्पदोपादानेऽपि अयमात्मा ज्ञानादित्यत्र पुनरव्याप्तिः, समनियताभावयोरैक्यमते हेतुसमानाधिकरणसंयोगावच्छिन्नघटाभावस्यैव घटप्रतियोगिकसंयोगेन प्रमेयसामान्याभावस्वरूपतया तादृशघटाभावनिरूपितप्रमेयसामान्यनिष्ठप्रतियोगितासामान्यशून्यत्वस्याप्रसिद्धत्वात्। न च संयोगेनात्मत्वाभावमादायाव्याप्तिवारणाय व्याप्यवृत्तिसाध्यकस्थलीयलक्षणे हेतुसमानाधिकरणाभावीयप्रतियोगितायाः साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेनावश्यंविवक्षणीयतया तत एवोक्तस्थले संयोगेन घटाभावस्य लक्षणाघटकत्वसम्भवे कथं तादृशाभावमादायोक्ताव्याप्तिरिति वाच्यम्? साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितापदेन साध्यतावच्छेदकसंसर्गातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यनिष्ठत्वोभयाभाववत्प्रतियोगिताया एव विवक्षणीयत्वात्, तावतैव संयोगावच्छिन्नात्मत्वाभावस्य वारणसम्भवेन संयोगावच्छिन्नघटाभावमादायोक्ताव्याप्तेरनुद्धारादाह **समनियतेति**। केचित्तु समवायेन घटाभावस्यापि घटप्रतियोगिकसमवायेन प्रमेयाभावरूपतया तादृशघटसामान्याभावमादायैवोक्तस्थलेऽव्याप्तिः सम्भवतीत्याह—समनियतेतीत्यपि वदन्ति। समनियताभावयोरैक्ये मानाभावः, अन्यथा संयोगेन घटो नास्तीति

---

अत्र द्रव्यं भावत्वादित्यादौ हेतुसमानाधिकरणद्रव्यत्वाभावनिरूपितप्रतियोगित्वाभावप्रतियोगितावच्छेदकताया लाघवेन तादृशाभावीयप्रतियोगित्वनिष्ठतद्व्यक्तित्व एव स्वीकरणीयतया तादृशप्रतियोगितात्वावच्छिन्नाभावाप्रसिद्ध्याऽतिव्याप्तिः, घटाभावीयप्रतियोगिताशून्यावृत्तिभिन्नत्वस्य साध्यतावच्छेदके सत्त्वादिति चेन्न? तादृशाभावनिरूपितप्रतियोगित्वनिष्ठोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकूटत्वावच्छिन्नत्वनिरूपितवृत्तितात्वावच्छिन्नप्रतियोगिताकाभावस्य विवक्षितत्वात्। न चोक्तैकव्यक्तिव्यभिचारिण्यतिव्याप्तिः? तादृशप्रतियोगितात्वसमानाधिकरणोभयावृत्तिधर्मकूटत्ववत्त्वस्य विवक्षितत्वात्, तद्वत्त्वञ्च स्वाश्रयाश्रयत्वसम्बन्धेनेति विभावनीयम्।

समनियताभावयोरैक्यानुपगमाच्च घटादिसामान्याभावस्यैव घटीयादिसंयोगसम्बन्धेन प्रमेयादिसामान्याभावतया पुनर्नाप्रसिद्धिः ।

प्रत्यक्षदशायां घटप्रतियोगिकसंयोगावच्छिन्नप्रमेयाभावस्य प्रत्यक्षापत्तिः स्यात् । न चेष्टापत्तिरनुभवविरोधात्, संयोगावच्छिन्नघटाभावप्रत्यक्षोत्तरं घटप्रतियोगिकसंयोगावच्छिन्नप्रमेयाभावं साक्षात्करोमीत्यनुव्यवसायानुत्पत्तेरित्याशयेनाह समनियताभावयोरैक्यानभ्युपगमाच्चेति । वस्तुतः समनियताभावयोरैक्याभ्युपगमेऽपि घटप्रतियोगिकसंयोगावच्छिन्नप्रमेयाभावप्रतियोगित्वं घट एवाभ्युपगम्यते न तु प्रमेयमात्रे इति चेन्न कुत्राप्यव्याप्तिगन्धोऽपीति ध्येयम् । घटादिसामान्याभावस्यैवेति । संयोगसम्बन्धावच्छिन्नप्रतियोगिताकेत्यादिः । घटीयेति । घटादिप्रतियोगिकेत्यर्थकम् । पुनर्नाप्रसिद्धिरिति । तादृशघटाभावनिरूपितप्रतियोगितायाः प्रमेयमात्रे विद्यमानतया तच्छून्यत्वं न कुत्रापि प्रसिद्ध्यतीति हृदयम् ।

टीकायां समनियताभावयोरिति । ननु यत्किञ्चिदेकाभावप्रतियोगितात्वं यद्धर्मव्यापकतावच्छेदकमित्यस्यावश्यं वक्तव्यतया घटीयसंयोगसम्बन्धेन प्रमेयाभावस्य घटसामान्याभावरूपत्वेऽपि कथं तादृशप्रतियोगित्वाभावाप्रसिद्धिरिति चेन्न ? यथाश्रुताभिप्रायेण तादृशाप्रसिद्धेरभिधानात् । न च घटीयसंयोगेन प्रमेयाभावप्रतियोगित्वं घटत्वावच्छिन्नमेवेति तत्प्रतियोगिताया घटनिष्ठतया कथं तादृशप्रतियोगित्वाभावाप्रसिद्धिरिति वाच्यम् ? प्रतियोगितान्यूनवृत्तिधर्मे प्रतियोगितावच्छेदकत्वमस्वीकृत्यैव तादृशाप्रसिद्धेरभिहितत्वादिति ध्येयम् । अथ घटीयसंयोगसम्बन्धावच्छिन्नप्रतियोगित्वं कथं लक्षणघटकं साध्यतावच्छेदकसंसर्गतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नसंसर्गताकप्रतियोगित्वस्यैव तथात्वात्, अन्यथा महानसीयसंयोगेन वह्न्यभावमादाय वह्निमान्धूमादित्यादौ लक्षणसमन्वयो न स्यात् इति समनियताभावयोरैक्यानभ्युपगमो निरर्थक इति चेन्न ? संयोगेन घटाभावस्यैव संयोगेन घटघटान्यप्रमेयोभयाभावरूपतया तादृशसंसर्गताकप्रमेयनिष्ठप्रतियोगिताशून्यत्वाप्रसिद्धेरभिहितत्वात् इति वदन्ति ।

तत्प्रतियोगिताया अवच्छेदकीभूतेति । न च तत्प्रतियोगिताशून्यावृत्तित्वमेव लाघवात् विवक्षणीयमिति वाच्यम् ? तत्प्रतियोगितात्वावच्छिन्नाभावविवक्षणेऽसम्भवापत्तेः, तत्प्रतियोगित्वनिष्ठप्रतियोगितायाः तादृशप्रतियोगित्वनिष्ठतद्व्यक्तित्वावच्छिन्नत्वादित्यस्याग्रे स्वयमेव वक्तव्यत्वात् । न च तथापि तत्प्रतियोगितानिरूपकाभावप्रतियोगित्वविवक्षणान्न दोष इति वाच्यम् ? समनियताभावयोरैक्याभ्युपगमे पूर्वोक्त-

एकधर्मावच्छिन्नार्थकं चैकपदमव्याप्यवृत्तिसाध्यकस्थलीयनिरुक्त्यभिप्रायेण। तथाविधा या एकधर्मावच्छिन्नप्रतियोगिता तत्सामान्यशून्यावृत्तित्वमिति योजनया यत्प्रतियोगिताया अवच्छेदकीभूतधर्मावच्छिन्नानधिकरणत्वं हेतुमतस्तत्प्रतियोगिताया अवच्छेदकीभूतधर्मावच्छिन्नप्रतियोगितासामान्यशून्यत्वं तत्रार्थ इति वस्तुगतिः। एकपदं शृङ्गग्राहिकतया तत्तदभावप्रवेशार्थमिति तु रिक्तं वचः

प्रतियोगितायामेकत्वविशेषणमव्याप्यवृत्तिसाध्यकस्थलाभिप्रायेणेत्याहैकधर्मेति। अव्याप्यवृत्तीति। प्रतियोगिवैयधिकरण्यघटितलक्षणाभिप्रायेणेति तात्पर्यम्। तथाविधेत्यस्य सम्बन्धात् तादृशलक्षणार्थं व्याचष्टे तथाविधेत्यादि। तत्, शून्यत्वम्=हेतुसमानाधिकरणाभावीयैकधर्मावच्छिन्नप्रतियोगिताशून्यत्वम्। योजनया=परस्परसम्बन्धेन। तत्पदाव्यवहितोत्तरतत्पदोपस्थित्यादिनेति यावत्, यत्प्रतियोगिताया इत्यादि।

तथा च यत्प्रतियोगितावच्छेदकधर्मावच्छिन्नानधिकरणं हेत्वधिकरणं तत्प्रतियोगितात्वावच्छिन्नाभावाधिकरणनिरूपितवृत्तित्वाभाववान् यस्तदन्यसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितार्थः। भवति हि वह्निमान् धूमादित्यादौ घटत्वावच्छिन्नानधिकरणपर्वतादिवृत्तिघटाभावीयप्रतियोगित्वाभाववदवर्त्तमानघटत्वादिभिन्नत्वस्य साध्यतावच्छेदके वह्नित्वे सत्त्वात् लक्षणसमन्वयः। धूमवान् वह्नेरित्यादौ तु तादृशधूमाभावस्यैव लक्षणघटकतया तदीयप्रतियोगिताशून्यावृत्तित्वस्य धूमत्वरूपसाध्यतावच्छेदके सत्त्वान्नातिव्याप्तिः। एवं घ्राणग्राह्यगुणवान् द्रव्यत्वादित्यादौ घ्राणग्राह्यगुणाभावीयप्रतियोगितावच्छेदकगन्धत्वावच्छिन्नानधिकरणत्वस्य हेतुमति जलादौ सत्त्वात् तादृशगन्धत्वावच्छिन्नप्रतियोगिताशून्ये घटपटादौ घ्राणग्राह्यगुणत्वरूपसाध्यतावच्छेदकस्यावृत्तित्वात् न तत्राप्यतिव्याप्तिरिति तु तत्त्वम्। मतान्तरं दूषयितुमुपन्यस्यति **एकपदमिति**। **शृङ्गेति**। गोशृङ्गग्राहिकतयेत्यर्थः। **तत्तदिति**। यत्किञ्चिदभावप्रवेशार्थमित्यर्थः। रिक्तं=तुच्छम्। कथन्तानिवृत्त्यर्थमाह **तन्निवेशस्येति**। तत्तदभावनिवेशस्येत्यर्थः। तल्लाभा-

---

रीत्या अप्रसिद्ध्यापत्तेः। अस्मन्मते तदभ्युपगमेऽनभ्युपगमे वाऽप्रसिद्धेरसम्भवादिति केचित्।

हेतुसामानाधिकरण्यप्रवेशवैयर्थ्यात् । यत्किञ्चित्पदेनैव तल्लाभादिति ध्येयम् । यद्यपि प्रमेयवान् वाच्यत्वादित्यादौ समवायेन साध्यतायां व्यभिचारिण्यतिव्याप्तिः, प्रमेयत्वावच्छिन्नाभावप्रतियोगितासामान्यशून्यत्वाप्रसिद्धेः; तादृशाभावान्तरस्य निरुक्तप्रतियोगितानवच्छेदकतायाः प्रमेयत्वे सत्त्वात् । तथापि तादृशयत्किञ्चिदेकाभावप्रतियोगितात्वं यद्धर्मव्यापकतावच्छेदकं तत्त्वं विवक्षितम्, अस्ति च प्रमेयत्व-

---

त्=तत्तदभावस्य लाभसम्भवात् । तथा च यत्किञ्चित्पदेनैव तत्तदभावस्यावश्यं प्रवेशनीयतया तल्लाभार्थकमेकपदं निरर्थकं स्यादिति भावः ।

शङ्कते **यद्यपीति** स्वरूपेण प्रमेयसाध्यकवाच्यत्वहेतोः सद्धेतुत्वात् समवायेन साध्यतायामित्युक्तम् । सम्बन्धान्तरेण प्रमेयसाध्यकवाच्यत्वादौ व्यभिचारिण्यतिव्याप्तिरस्त्येवेति भावः । अतिव्याप्तिं सम्पादयति **प्रमेयत्वेति** । तादृशहेतुसमानाधिकरणप्रमेयत्वावच्छिन्नाभावप्रतियोगितात्वावच्छिन्नाभावाप्रसिद्धेरित्यर्थः । यद्यपि समवायावच्छिन्नप्रमेयाभावप्रतियोगित्वं समवेतप्रमेय एव वर्त्तते इति तादृशप्रतियोगितासामान्यशून्यत्वस्य नाप्रसिद्धिर्न वा निरुक्तव्यभिचारिण्यतिव्याप्तिस्तथापि प्रतियोगितायाः प्रतियोगितावच्छेदकस्वरूपत्वमङ्गीकृत्यैव तादृशप्रतियोगिताशून्यत्वाप्रसिद्धिरभिहितेति ध्येयम् । **तादृशेति** । प्रतियोगिव्यधिकरणहेतुसमानाधिकरणघटाद्यभावान्तरस्येत्यर्थः । **निरुक्तेति** । निरुक्तायाः घटाद्यभावप्रतियोगितात्वावच्छिन्नाभाववदवृत्तिभिन्नत्वरूपायाः प्रतियोगितानवच्छेदकताया इत्यर्थः । प्रमेयत्वे **सत्त्वादिति** । तथा च प्रमेयवान् वाच्यत्वादित्यादौ समवायेन प्रमेयाभावस्य हेतुसमानाधिकरणत्वेऽपि तदीयप्रतियोगितासामान्यशून्यत्वस्याप्रसिद्धत्वात् तादृशप्रमेयसामान्याभावो न लक्षणघटकः; अपि तु घटाद्यभाव एव तथा, तदीयप्रतियोगितासामान्यशून्यावृत्तिघटत्वादिभिन्नत्वस्य साध्यतावच्छेदके प्रमेयत्वे सत्त्वात् भवति तत्रातिव्याप्तिरिति भावः ।

उत्तरयति **तथापीति** । **यत्किञ्चिदेकेति** । इदञ्च समवायेन वस्तुमात्रस्यैव व्याप्यवृत्तित्वमित्यभिप्रेत्य, अन्यथा त्वेकाभावप्रतियोगितात्वमित्येव वक्तव्यम् इति ध्येयम् । **यद्धर्मेति** यद्धर्मवन्निष्ठाभावप्रतियोगितानवच्छेदकमित्यर्थः । तत्त्वं तद्धर्मत्वम् पारिभाषिकावच्छेदकत्वमिति

अत एवातिरिक्तसामान्याभावस्याभावे धूमत्वादेरप्यनवच्छेदक-

व्यापकत्वं प्रमेयसामान्याभावप्रतियोगितायामित्यदोषः । तत=अवच्छेदकत्वम्। अत एवेति। यत्किञ्चिदेकाभावव्यक्तेः प्रवेशादेवेत्यर्थः। यदि सामा-

शेषः । विवक्षितमिति । न च तादृशप्रतियोगित्वं यद्धर्मव्यापकमित्येवं लाघवात् कुतो न विवक्षणीयमिति वाच्यम् ? प्रमेयत्वादिप्रकारेण घटादिनिष्ठप्रतियोगिताया अपि वह्नित्वादिव्यापकत्वापत्त्या कुत्रापि लक्षणसमन्वयासम्भवात्। न च यद्धर्मवन्निष्ठभेदप्रतियोगितानवच्छेदकत्वस्य व्यापकत्वस्वरूपत्वाभ्युपगमे न कोऽपि दोष इति वाच्यम् ? घटादिनिष्ठप्रतियोगिताव्यक्तेः सर्वस्या एव घटत्वादिमन्निष्ठभेदप्रतियोगितावच्छेदकतया पारिभाषिकावच्छेदकाप्रसिद्ध्यापत्तेः । नचैकधर्मावच्छिन्नप्रतियोगित्वमेकमिति वाच्यम् ? तथा सत्यपि वह्निधूमोभयवान् वह्नेरित्यत्रातिव्याप्त्यापत्तेः, वह्निधूमोभयाभावीयप्रतियोगितामात्रस्यैव तादृशोभयत्ववन्निष्ठभेदप्रतियोगितावच्छेदकत्वादिति दिक्।

उक्तातिव्याप्तिं वारयति अस्ति चेति । प्रमेयत्वव्यापकत्वं=साध्यतावच्छेदकीभूतप्रमेयत्वव्यापकत्वम्। इत्यदोष इति। तथा च प्रमेयवान् वाच्यत्वादित्यादौ हेतुसमानाधिकरणप्रमेयसामान्याभावीयप्रमेयनिष्ठप्रतियोगितात्वस्य प्रमेयत्ववन्निष्ठाभावप्रतियोगितानवच्छेदकतया यद्धर्मपदेन साध्यतावच्छेदकीभूतप्रमेयत्वस्यैव धर्त्तुं शक्यत्वान्नातिव्याप्तिः । एवं वह्निमान् धूमादित्यादौ तादृशघटाभावप्रतियोगितात्वं घटत्वस्यैव व्यापकतावच्छेदकं न तु वह्नित्वस्य, वह्नित्ववति वह्नौ घटाभावीयप्रतियोगित्वसामान्याभावस्यैव सत्त्वादिति नाव्याप्तिः, प्रमेयधूमवान् वह्नेरित्यादौ तु तादृशहेतुमन्निष्ठप्रमेयधूमाभावप्रतियोगितात्वस्य प्रमेयधूमत्वव्यापकतावच्छेदकत्वान्न कोऽपि दोष इत्याशयः। सामान्याभावानभ्युपगमे धूमवान् वह्नेरित्यादावतिव्याप्तिः, वह्निमत्ययोगोलके वर्त्तमानस्य तत्तद्धूमाभावस्य प्रतियोगित्वसामान्याभाववति धूमान्तरे धूमत्वस्य वर्त्तमानतया तादृशाभाववत्यवर्त्तमानगगनादिभिन्नत्वस्य साध्यतावच्छेदके धूमत्वे सत्त्वात्, अतः सामान्याभावोऽवश्यं स्वीकर्त्तव्यस्तथा सति न तत्राऽतिव्याप्तिः, हेतुसमानाधिकरणधूमसामान्याभावीयप्रतियोगित्वसामान्याभाववति घटादौ धूमत्वस्यावृत्तित्वेन धूमत्वरूपसाध्यतावच्छेदकस्य पारिभाषिकावच्छेदकत्वादित्येव मत एवेत्यादि दीधितिग्रन्थतात्पर्यमाह यदीत्यादि ।

त्वापातादग्रे तत्साधनमपि साधु सङ्गच्छत इति वाच्यम्; वह्निघटवृत्ति द्वित्व-तार्णातार्णदहनवृत्ति द्वित्वाद्यवच्छिन्नप्रतियोगि-

न्याभावो नास्ति तदा वह्निमन्निष्ठतत्तद्धूमाभावप्रतियोगितासामान्यशून्ये धूमान्तरे वर्तमानतया धूमत्वस्य निरुक्तावच्छेदकत्वं न स्यादिति व्याप्तिलक्षणातिव्याप्तिनिरासार्थमेव सामान्याभावः साधयिष्यते इति । तथा च धूमसामान्याभावस्यैव हेतुसमानाधिकरणस्य प्रतियोगितासामान्यशून्ये घटादाववृत्त्या धूमत्वस्यावच्छेदकत्वमिति भावः । ननु तादृशप्रतियोगित्वान्यूनानतिरिक्तवृत्तित्वं वाच्यं वह्नित्वं तु घटवृत्तितादृशप्रतियोगित्वन्यूनवृत्त्यत आह—तार्णाता-

निरुक्तप्रतियोगितानतिरिक्तवृत्तित्वस्य पारिभाषिकावच्छेदकतानात्मकत्वे हेतुमाह दीधितौ **वह्निघटेति** । तथा च वह्निमान् धूमादित्यादौ सर्वत्र व्याप्तिलक्षणस्यासम्भवः हेतुमन्निष्ठवह्निघटोभयाभावप्रतियोगिताया घटे वह्नावपि वर्त्तमानतया तादृशप्रतियोगित्वाभाववति पटादौ वह्नित्वादेरसत्त्वात् वह्नित्वादिरूपसाध्यतावच्छेदकस्यैव पारिभाषिकावच्छेदकत्वात् । न च हेतुसमानाधिकरणाभावे प्रतियोगिवैयधिकरण्यविशेषणस्यावश्यकतया तत एव वह्निघटोभयाभावस्य वारणसम्भवे कुतोऽसम्भव इति वाच्यम्? साध्यतावच्छेदकसम्बन्धसामान्ये पूर्वोक्तोभयाभावघटितप्रतियोगिवैयधिकरण्यस्य विवक्षणीयतया निरुक्तोभयाभावस्य लक्षणघटकत्वसम्भवादिति भावः । तार्णातार्णोभयाभावमादायाव्याप्त्यभिधानस्य सार्थकत्वं प्रदर्शयितुमाह टीकायां **नन्विति** । **तादृशेति** । हेतुसमानाधिकरणं यत्किञ्चिदेकाभावप्रतियोगिताव्यापकत्वे सति तादृशप्रतियोगितासामान्याभाववदवृत्तित्वं पारिभाषिकावच्छेदकत्वं वाच्यमित्यभिप्रायः । न **घटवृत्तीति** । न वह्निघटोभयाभावीयघटनिष्ठप्रतियोगिताव्यापकमित्यर्थः ।

वह्निघटवृत्तीति । न च साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वस्यावश्यं प्रतियोगितायां निवेशिततया तत एवोक्ताभाववारणसम्भवे तादृशप्रतियोगित्वान्यूनवृत्तित्वविशेषणदानमसङ्गतमिति वाच्यम्, तेजोघटोभयाभावमादायैवाव्याप्तिवारणार्थम् तस्य सार्थक्यसम्भवात् । अथ साध्यतावच्छेदकातिरिक्तव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगितानिवेशेनैवोक्ताभाववारणसम्भवे कल्पान्तरानुसरणं व्यर्थमिति

यदि हेतुसमानाधिकरणयत्किञ्चिदेकाभावीयप्रतियोगिताव्यापकत्वे सति तादृशप्रतियोगित्वाभाववदवृत्तित्वं पारिभाषिकप्रतियोगितावच्छेदकत्वमुच्यते तदा वह्निघटोभयाभावमादाय वह्निमान् धूमादित्यादौ असम्भवो न सम्भवति। तादृशोभयाभावप्रतियोगितायाः घटेऽपि सत्त्वेन तत्र वह्नित्वस्यावर्त्तमानतया वह्नित्वस्य तादृशाभावप्रतियोगित्वाव्यापकत्वात् तादृशप्रतियोगिताव्यापकतादृशप्रतियोगित्वाभाववदवृत्तिवह्निघटोभयत्व भिन्नत्वस्य वह्नित्वेऽनपायात्, इति तार्णातार्णोभयाभावादिकमादायैव वह्निमान् धूमादित्यादौ असम्भवः, निरुक्तोभयाभावप्रतियोगितावति तार्णेऽतार्णेऽपि च वह्नित्वस्य विद्यमानतया ( वह्नित्वस्य ) तादृशप्रतियोगिताव्यापकत्वात् तादृशप्रतियोगिताशून्ये घटादौ अवर्त्तमानत्वाच्च। न चैवं तद्रूपवान् तद्रसादित्यादौ तद्रूपघटोभयाभावमादायाव्याप्त्यसम्भवात् कथमसम्भवः सम्भवतीति वाच्यम्? तादृशप्रतियोगिताव्यापकत्वानिवेशपक्ष एवासम्भवस्य संगमनीयत्वात्। तन्निवेशपक्षे तु न सम्भवोऽसम्भव इति व्युत्पत्त्या असम्भवशब्दस्याव्याप्तिपरताया एवोपगन्तव्यत्वादिति ध्येयम्। यत्तु तद्रूपवान् तद्रसादित्यादावपि तद्रूपात्मकप्रमेयतद्रूपान्यप्रमेयोभयाभावमादायैवासम्भवः सम्भवतीति मतं तत्तुच्छं? तद्रूपान्यप्रमेये साध्यतावच्छेदकस्य तद्रूपत्वस्यावर्त्तमानत्वात् प्रमेयमात्रस्य तादृशोभयाभावप्रतियोगित्वात्। तथा च तार्णातार्णोभयाभावविवक्षणं सप्रयोजनकमित्याहात **आहेति**। सर्वत्र सद्धेतुस्थलीयसाध्यतावच्छेदके पारिभाषिकप्रतियोगितावच्छेदकत्वलक्षणस्यातिव्याप्तिसम्भवे व्याप्तिलक्षणोऽसम्भव एव भवतीत्यतोऽतिप्रसङ्गादित्यस्य भावमाह **तथा चेति**।

दीधितौ एतेनेत्यादिपाठस्तु न प्रामाणिकः, तस्य प्रामाणिकत्वे त्वाह **तार्णातार्णेति**। धूमवान् वह्नेरित्यादौ वह्निमन्निष्ठधूमसामान्या-

---

चेन्न ? प्रमेयवह्निधूमोभयवान् वह्नेरित्यत्र वह्निधूमोभयत्वस्य साध्यतावच्छेदकातिरिक्ततया तदवच्छिन्नप्रतियोगिताकसाध्याभावस्यलक्षणाऽघटकत्वात् अयोगोलकावृत्त्य-भावप्रतियोगिताशून्ये अयोगोलकीयवह्नौ तादृशोभयत्वस्य वृत्तेरतिव्याप्तिरतः कल्पान्तरानुसरणस्य कृतत्वादिति ध्येयम्।

नन्वेवमपि हेतुमन्निष्ठाभावविशिष्टत्वं पारिभाषिकावच्छेदकत्वमित्यस्यैव निरुक्तलक्षणार्थत्वं विवक्षणीयम्, वैशिष्ट्यम् स्वनिरूपितप्रतियोगित्वाभाववदवृत्तित्व,-स्वनिरूपितप्रतियोगितावच्छेदकसमानवृत्तिकत्वोभयसम्बन्धेन। तथा च तत एव

ताकाभावप्रतियोगितानतिरिक्तवृत्तिवह्नित्वादावतिप्रसङ्गात् । एते-नान्यूनवृत्तित्वविशेषितमपि परास्तम् । अत एव नाना प्रतियो-

र्णेति । अतिप्रसङ्गादिति । तथा च व्याप्तिलक्षणासम्भव इति भावः । [ एतेनेति क्वचित्कं तत्र ] ( एतेन ) तार्णतार्णोभयाभावमादाय दत्त-दोषेण । सामान्याभावप्रतियोगित्वमेकमेव समस्तप्रतियोगिवृत्ति इति तदन-तिरिक्तवृत्त्येव धूमत्वमतो नोक्तातिव्याप्तिरिति प्रगल्भोक्तं दूषयति अत एवेति । उक्तरीत्या वह्नित्वादेरवच्छेदकत्वप्रसङ्गादेवेत्यर्थः । ननु प्रति-योगितानवच्छेदकमित्यत्रावच्छेदकत्वं स्वरूपसम्बन्ध एव वाच्यम्, स्वाव-

भावीयप्रतियोगित्वं यदि प्रतिव्यक्ति भिन्नम् तदाऽतिव्याप्तिः, धूमनिष्ठ-तत्तत्प्रतियोगित्वाभाववति धूमान्तरे धूमत्वस्य वृत्तित्वादतस्तादृशसामा-न्याभावीयधूमत्वावच्छिन्नप्रतियोगित्वं सकलधूमादिनिष्ठमेकमेव वा-च्यम्, तथा च न धूमवान् वह्नेरित्यादावतिव्याप्तिः । सकलधूमनिष्ठैक-प्रतियोगित्वाभाववति घटादौ धूमत्वस्यासत्त्वादिति रीत्योक्तातिव्याप्तिं वारयतां प्रगल्भानां मतं तु न युक्तं ? तार्णतार्णोभयाभावमादाय पूर्वोक्त-रीत्या वह्नित्वादेः पारिभाषिकप्रतियोगितावच्छेदकत्वापत्त्या व्याप्तिलक्ष-णासम्भवस्य केनापि प्रकारेण वारयितुमशक्यत्वादित्याह सामान्या-भावेति । उक्तरीत्येत्यादि । तथा च व्याप्तिलक्षणासम्भवोऽशक्यवार-ण इति भावः ।

लघुरूपेति दीधितिमवतारयति नन्विति । प्रतियोगितानवच्छेदक-मिति । हेतुसमानाधिकरणप्रतियोगिव्यधिकरणाभावीयेत्यादिः । प्रतियो-गितावच्छेदकत्वाभाववदित्यर्थः । इत्यत्र=प्रतियोगितावच्छेदके । घटकत्वं सप्तम्यर्थः । अन्वयश्चास्य अवच्छेदकत्वमित्यनेन । तथा च हेतुसमाना-धिकरणप्रतियोगिव्यधिकरणाभावीयप्रतियोगितावच्छेदकत्वाभाववद्घटकं तादृशप्रतियोगितावच्छेदकत्वमित्यर्थः पर्यवसितः । स्वरूपसम्बन्धरूप-

तार्णतार्णोभयाभाववारणसम्भवे कल्पान्तरानुसरणं व्यर्थम् इति चेन्न ? निरुक्तकल्पे प्रतियोगिताद्वयप्रवेशेन गौरवात् स्वाभाववदवृत्तित्वस्वसमानवृत्तिकत्वोभयसम्बन्धेन तादृशप्रतियोगितावच्छेदकविशिष्टधर्मं एव पारिभाषिकावच्छेदक इत्यस्योत्तरकल्पेन विवक्षणीयतया तत्र प्रतियोगिताद्वयस्याप्रवेशादिति सुधीभिर्विभावनीयम् ।

गिवृत्त्येकप्रतियोगिताङ्गीकारेऽपि न निस्तारः, लघुरूपसमनियत-

च्छेद्यप्रतियोगिताकत्वेन साध्यतावच्छेदकं पुनर्विशेषणीयमतो गुरुधर्मेण साध्यतायां नातिव्याप्तिरत आह लघुरूपेति। ननु घटवान् महाकालत्वादि-त्यादावव्याप्तिभियेव गुरुरूपेण साध्यतायामतिव्याप्तिभियापि प्रतियोगिता-

मेवेत्यत्रैवकारेण पूर्वोक्तप्रतियोगितानतिरिक्तवृत्तित्वस्य तादृशप्रतियोगि-तावच्छेदकत्वस्वरूपत्वव्यवच्छेदः। नन्वेवं प्रमेयधूमवान् वह्नेरित्यादा-वतिव्याप्तिः, 'प्रमेयधूमत्वस्य गुरुतया तत्र स्वरूपसम्बन्धरूपप्रतियोगिता-वच्छेदकत्वस्य विरहादित्यत आह स्वावच्छेद्येति। स्वं साध्यतावच्छे-दकं तदवच्छिन्ना प्रतियोगिता यस्य स्वस्य एवम्भूतं यत् साध्यतावच्छे-दकं तत्त्वेनेत्यर्थः। पुनर्विशेषणीयमिति। तथा च हेतुसमानाधिकर-णप्रतियोगिव्यधिकरणाभावीयप्रतियोगितानिरूपितस्वरूपसम्बन्धरूपाव-च्छेदकत्वाभाववत् यत् स्वावच्छिन्नप्रतियोगिताकत्वविशिष्टं साध्यता-वच्छेदकं तदवच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति समुदिततात्प-र्यम्। गुरुधर्मेण साध्यतास्थले प्रमेयधूमवान् वह्नेरित्यादौ प्रमेयधूमत्व-रूपसाध्यतावच्छेदके तादृशप्रतियोगितावच्छेदकत्वाभावस्य सत्त्वेऽपि गुरुधर्मावच्छिन्नप्रतियोगित्वाप्रसिद्ध्या स्वपदेन प्रमेयधूमत्वस्य धर्तुम-शक्यत्वात् स्वावच्छिन्नप्रतियोगिताकत्वस्य तत्र विरहेणातिव्याप्त्यसम्भ-वादित्याह गुरुधर्मेणेति। प्रमेयधूमत्वादीत्यादिः।

मतान्तरसिद्धं लघुरूपेत्यादेरवतरणमाह नन्विति। अव्याप्ति-भियेवेत्यादिः। यथा घटवान् महाकालत्वादित्यादौ यथाश्रुतप्रतियोगि-व्यधिकरणाभावाऽप्रसिद्ध्याऽव्याप्तिरतस्तद्वारणार्थं प्रतियोगितावच्छेदक-सम्बन्धेन प्रतियोग्यनधिकरणहेत्वधिकरणवृत्त्यभावीयप्रतियोगितासामान्ये साध्यतावच्छेदकीभूतयद्धर्मावच्छिन्नत्व, साध्यतावच्छेदकसम्बन्धरूपयत्-सम्बन्धावच्छिन्नत्वोभयाभावस्तेन सम्बन्धेन तद्धर्मावच्छिन्नसामाना-धिकरण्यं हेतौ व्याप्तिरित्यस्य पूर्वमुक्ततया समवायाद्यवच्छिन्नघटाद्य-भावमादायैव तत्र लक्षणसंगतिः, तथा गुरुधर्मावच्छिन्नसाध्यकव्यभि-चारिणि प्रमेयधूमवान् वह्नेरित्यादावतिव्याप्तिवारणार्थमपि तादृशप्रति-योगिताधर्मिकोभयाभावघटितं लक्षणं वक्तव्यं तथा च न तत्रातिव्याप्तिः

गुरुरूपेण साध्यतायां सद्धेतावव्याप्तिः, तादृशतदवच्छिन्नत्वा-प्रसिद्धेरिति चेन्न ?

प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वस्य विवक्षितत्वात् ।

धर्मिकोभयाभावघटितं लक्षणं वाच्यमतस्तदपि दूषयति लघुरूपेत्यादिनेत्यपि कश्चित । वह्नित्वादिलघुरूपसमनियतं यत्प्रमेयवह्नित्वादिकं ताद्रूप्येण साध्यतायां धूमादावव्याप्तिरित्यर्थः । प्रतियोगितावच्छेदकेति-हेतुस-

साध्यतावच्छेदकीभूतप्रमेयधूमत्वावच्छिन्नत्वस्य कुत्रापि प्रतियोगितायामप्रसिद्धतया तादृशहेतुमन्निष्ठाभावप्रतियोगितायां तादृशसाध्यतावच्छेदकावच्छिन्नत्वाभावस्य वक्तुमशक्यत्वादित्याशयः । तदपि=निरुक्तप्रतियोगिताधर्मिकोभयाभावघटितलक्षणमपि । दूषयतीति । उक्तरीत्या प्रमेयधूमवान् वह्नेरित्यादावतिव्याप्तिवारणेऽपि प्रमेयवह्निमान् धूमादित्यत्र तल्लक्षणेऽव्याप्तिः. प्रमेयवह्नित्वरूपगुरुधर्मावच्छिन्नत्वस्य प्रतियोगितायामप्रसिद्धतया हेतुमन्निष्ठघटाभावप्रतियोगितायां प्रमेयवह्नित्वावच्छिन्नत्वाभावाप्रसिद्धेरिति हृदयम । अग्रे विवक्षणीयप्रतियोगिताधर्मिकोभयाभावघटितलक्षणे गुरुरूपेण साध्यतायां सद्धेतावव्याप्तेर्वारणीयतया इदानीं तादृशलक्षणमवलम्ब्य प्रमेयधूमवान् वह्नेरित्यत्रातिव्याप्तिवारणं प्रमेयवह्निमान् धूमादित्यादौ चाव्याप्त्यभिधानं न समीचीनमित्यस्वरसः कश्चिदित्युक्त्वा सूचित इति ध्येयम् । **वह्नित्वादीति** । वह्नित्वादिरूपलघुधर्मव्यापकीभूतं व्याप्यीभूतञ्च यदित्यर्थः । ताद्रूप्येण=प्रमेयवह्नित्वादिना । **अव्याप्तिरिति** । स्वमते प्रमेयवह्निमान् धूमादित्यादौ प्रमेयवह्नित्वरूपसाध्यतावच्छेदके तादृशधूमादिमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वस्य सत्त्वेऽपि प्रमेयवह्नित्वावच्छिन्नप्रतियोगित्वाप्रसिद्ध्या स्वावच्छिन्नप्रतियोगिताकत्वविरहात् निरुक्तरीत्या प्रमेयधूमवान् वह्नेरित्यादावतिव्याप्तिवारणसम्भवेऽपि उक्तस्थलेऽव्याप्तेर्वारयितुमशक्यत्वादिति भावः ।

**हेतुसमानेति** । प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीय-

वस्तुतस्तु तादृशप्रतियोगितानिरूपकावच्छेदकतानिरूपितप्रतियोगिताशून्यावृत्तित्वस्यैव विवक्षणीयतया उक्तनिवेशे लाघवासम्भवादित्यप्याहुः ।

तथापि यत्किञ्चिद्देशकाभावीयेति । अत्र हेतुसमानाधिकरणाभावद्वयुभया-

मानाधिकरणाभावप्रतियोगितायां यदवच्छेदकं तदभाववदवृत्तित्वस्य मूलस्थप्रतियोगितावच्छेदकान्तेन विवक्षितत्वादित्यर्थः। अत्र च येन सम्बन्धेन प्रतियोगितावच्छेदकत्वं तेनैव तदभावो ग्राह्यः, तेन धूमादिमन्निष्ठाभावप्रतियोगितावच्छेदकस्य घटत्वादेः कालिकादिसम्बन्धेनाभाववन्यात्मादौ

---

प्रतियोगितावच्छेदकीभूतं यत् तस्य तादृशप्रतियोगितावच्छेदकताघटकसम्बन्धेन योऽभावः स्वरूपेण तदधिकरणनिरूपितसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नवृत्तित्वाभाववद्भिन्नसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम्। प्रमेयधूमवान् वह्नेरित्यादौ तादृशवह्निमन्निष्ठप्रमेयधूमाभावप्रतियोगितावच्छेदकस्य धूमत्वस्य समवायेनाभाववति घटादौ समवायेन प्रमेयधूमत्वस्यावर्त्तमानतया तद्भिन्नत्वस्य साध्यतावच्छेदके प्रमेयधूमत्वेऽसत्त्वान्नातिव्याप्तिः, वह्निमान् धूमादित्यादौ तु तादृशघटाद्यभावप्रतियोगितावच्छेदकस्य घटत्वादेः समवायेनाभाववति वह्नयादौ घटत्वादेरेवावृत्तित्वात् तादृशघटत्वादिभिन्नत्वस्य साध्यतावच्छेदकवह्नित्वे सत्त्वात् लक्षणसमन्वयोऽपि बोध्यः। अत्र च = निरुक्तलक्षणे च। घटकत्वमग्रिमप्रतियोगितावच्छेदकत्वमित्यन्वयि सप्तम्यर्थः। तेनैव = प्रतियोगितावच्छेदकताघटकसम्बन्धेनैव। तदभावः = तादृशप्रतियोगितावच्छेदकस्याभावः।

प्रतियोगितावच्छेदकताघटकसम्बन्धेन प्रतियोगितावच्छेदकाभावप्रवेशस्य प्रयोजनमाह—तेनेति। यदि कालिकसंयोगसमवायस्वरूपाद्यन्यतमात्मकसम्बन्धसामान्येन तादृशप्रतियोगितावच्छेदकस्याऽभावो विवक्ष्यते तदा वह्निमान् धूमादित्यादौ अव्याप्तिः धूमादिमति वर्त्तमानस्य घटाद्यभावस्य प्रतियोगितावच्छेदकघटत्वादेः कालिकादिसम्बन्धसामान्येनाभाववति आत्मगगनादौ साध्यतावच्छेदकीभूतवह्नित्वस्य समवायेनावर्त्तमानत्वात् वह्नित्वस्यैव पारिभाषिकप्रतियोगितावच्छेदकत्वसम्भवादित्याह—

---

वृत्तिधर्मः स्वनिरूपितप्रतियोगित्वसम्बन्धेन यद्धर्मव्यापकतावच्छेदकः स धर्मः पारिभाषिकावच्छेदकः इत्येवं वक्तव्यम्। तेन वह्निमान् धूमादित्यादौ घटाद्यभावप्रतियोगितात्वस्य तादृशप्रतियोगित्वनिष्ठतद्व्यक्तित्वापेक्षया गुरुत्वेऽपि नासम्भवः। अत एव यत्किञ्चित्पदमपि सार्थकम्, निरुक्तोभयावृत्तिधर्मलाभायैवाभावे यत्कि-

वह्नित्वादेः समवायेन वृत्तावपि नोक्तावच्छेदकत्वम्, न वा धूमत्वादेः संयोगादिसम्बन्धेन स्वाभाववति समवेतत्वेऽप्यवच्छेदकत्वहानिः ।

धूमादीति । नोक्तावच्छेदकत्वम् = न निरुक्तपारिभाषिकप्रतियोगितावच्छेदकत्वम् । तथा चोक्तविवक्षायां न वह्निमान् धूमादित्यादावव्याप्तिः । न वह्निमान् धूमादित्यादौ सर्वत्रासम्भव इति तात्पर्योपवर्णनन्तु न समीचीनं, तादात्म्येनात्मसाध्यकज्ञानादिहेतौ लक्षणसमन्वयसम्भवात् तादृशप्रतियोगितावच्छेदकघटत्वादेः सम्बन्धसामान्येनाभाववति आत्मनि आत्मत्वस्य वृत्तेरिति भावः । ननु यत्किञ्चित्सम्बन्धेनैव तादृशप्रतियोगितावच्छेदकस्याभावो विवक्षणीयस्तथा च नाव्याप्तिः, तादृशघटत्वादेर्यत्किञ्चित्समवायसम्बन्धेनाभाववति वह्न्यादौ घटत्वादेरेवावृत्तितया तस्यैव पारिभाषिकावच्छेदकत्वादिति यदि ब्रूयात् तदाप्याह । न वेति । केचित्तु वह्निमान् धूमादित्यादौ वह्नित्वे पारिभाषिकावच्छेदकत्वलक्षणस्याव्याप्त्यभिधानदोषात्मिकामतिव्याप्तिमभिधाय धूमवान् वह्नेरित्यादौ धूमत्वे तल्लक्षणस्य प्रधानीभूतामव्याप्तिमप्याह नवेतीत्यप्यवतारयन्ति । धूमत्वादेरिति । हेतुमन्निष्ठतादृशाभावप्रतियोगितावच्छेदकस्येत्यादिः ।

ञ्चित्त्वस्य निवेशनीयत्वात् । केचित्तु हेतुसमानाधिकरणाभावत्ववृत्तिधर्मः पारिभाषिकावच्छेदकः, वृत्तित्वम् स्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वसम्बन्धेन, प्रतियोगिता च स्वनिरूपितप्रतियोगित्वसम्बन्धावच्छिन्ना ग्राह्येत्यपि वदन्ति ।

नोक्तावच्छेदकत्वमिति । अत्राव्याप्तिदानाभिप्रायस्तु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकाभावविशिष्टो धर्मः पारिभाषिकावच्छेदकः, वैशिष्ट्यं स्वाधिकरणनिरूपितवृत्तित्वाभाववत्त्वसम्बन्धेन । न वा धूमत्वादेरिति । अतिव्याप्तिदानाभिप्रायस्तु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकविशिष्टान्यो धर्मः पारिभाषिकावच्छेदकः, वैशिष्ट्यं स्वाभाववद्वृत्तित्वसम्बन्धेन । न चैवमुक्तकल्पे तादात्म्येन वह्निविशिष्टस्य संयोगेन साध्यतायां धूमहेतौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतघटत्वादेः संयोगेनाभाववति तादात्म्येनावृत्तित्वाप्रसिद्धयाऽव्याप्तिसम्भवेऽतिव्याप्तिदानमनुचितमिति वाच्यम् ? साध्यतावच्छेदकप्रतियोगिकसाध्यतावच्छेदकताघटकसम्बन्धेनावृत्तित्वस्य विवक्षितत्वात् । धूमवान् वह्नेरित्यादौ धूमत्वाभाववति तादृशसम्बन्धावच्छिन्नवृत्तित्वाप्रसिद्धावपि तादृशसम्बन्धावच्छिन्नवृत्तिताप्रतियोगिकस्वरूपसम्बन्धेन तादृशवृत्तित्वाभावस्यविवक्षितत्वादतिव्याप्तिसंगतेः । अत एव विषयितासम्बन्धेन घटत्वविशिष्टस्य

यत्तु साध्यतावच्छेदकताघटकसम्बन्धेन तदभावो ग्राह्य इति।

---

संयोगादीति। आदिना स्वरूपादिपरिग्रहः। स्वाभाववति = धूमत्वाभाववति। समवेतत्वेऽपि = समवायसम्बन्धेन वर्त्तमानत्वेऽपि। धूमत्वादेरिति पूर्वेणान्वयः। अवच्छेदकत्वहानिरिति। तथा च धूमवान् वह्नेरित्यादौ व्याप्तिलक्षणातिव्याप्तिः वह्निमन्निष्ठधूमाभावप्रतियोगितावच्छेदकस्य धूमत्वादेः यत्किञ्चित्व्यधिकरणसंयोगादिसम्बन्धेनाभाववति धूमे धूमत्वादेर्वृत्तेः तादृशधूमादावववर्त्तमानगगनादिभिन्नत्वस्य धूमत्वेऽनपायादतः तादृशप्रतियोगितावच्छेदकताघटकसम्बन्धेनैव तादृशप्रतियोगितावच्छेदकस्याभावो वाच्यस्तथासति नातिव्याप्तिः, तादृशधूमत्वादेः समवायेनाभाववति घटादौ धूमत्वादेरवर्त्तमानत्वात् धूमत्वादेरेव पारिभाषिकावच्छेदकत्वसम्भवादिति भावः।

साध्यतावच्छेदकताघटकसम्बन्धेन तादृशप्रतियोगितावच्छेदकाभावम् प्रवेशयतां मतं दूषयितुमुपन्यस्यति—यत्त्विति। तदभावः=तादृशहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकस्याभावः। ग्राह्य इति। तथा च न वह्निमान् धूमादित्यादावव्याप्तिः, हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकघटत्वादेः साध्यतावच्छेदकताघटकीभूतसमावायेनाभाववति वह्न्यादौ घटत्वादेरवर्त्तमानत्वात् तस्यैव पारिभाषिकावच्छेदकत्वात्। न वा धूमवान् वह्नेरित्यत्राप्यतिव्याप्तिः, तादृशसमवायेन धूमत्वाभाववति

---

समवायेन साध्यतायामीश्वरत्वहेतौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकमात्रस्यैव विषयितासम्बन्धेनाभाववति विषयितासम्बन्धेन वस्तुमात्रस्य वृत्तावपि नाव्याप्तिः, पूर्वोक्तोत्तरस्यैव सम्यक्त्वात्। अन्ये तु पारिभाषिकावच्छेदकत्वलक्षणे अतिव्याप्तिदोषस्यैव गुरुतया अव्याप्तिर्नाभिहितेत्याहुः।

ननु प्रतियोगितावच्छेदकताघटकसम्बन्धेन प्रतियोगितावच्छेदकाभावविवक्षणेऽपि विषयितासम्बन्धेन घटत्वविशिष्टस्य समवायेन साध्यतायामीश्वरत्वहेतावव्याप्तिः, प्रतियोगितावच्छेदकाभाववति नित्यज्ञाने विषयितासम्बन्धेन वस्तुमात्रस्यैव वृत्तेरिति चेन्न, अत्रापि साध्यतावच्छेदकप्रतियोगिकसाध्यतावच्छेदकताघटकसम्बन्धेनाऽवृत्तित्वस्य विवक्षितत्वात् तज्ज्ञानान्यज्ञाननित्यज्ञानोभयाभावप्रतियोगितावच्छेदकतादृशोभयत्वाभाववति तज्ज्ञाने तज्ज्ञानाविषयकवस्तुमात्रस्य विषयितासम्बन्धेनावृत्तेस्तस्यैव पारिभाषिकावच्छेदकत्वप्रसिद्धिसम्भवान्नाव्याप्तिरित्यपि वदन्ति।

तत्तुच्छम् । धूमत्वप्रकारकप्रमाविशेष्यवान् वह्नेरित्यादावतिव्याप्तेः । लघुतया हेतुमन्निष्ठतादृशप्रमाविशेष्याभावप्रतियोगितावच्छेदकीभूतस्य धूमत्वादेः स्वरूपसम्बन्धेनाभाववति धूम एव तादृशप्रमाविशेष्यत्वस्य वृत्तेः ।

तद्वदवृत्तित्वं च स्वरूपसम्बन्धेन तद्वति साध्यतावच्छेदकताघटकसम्बन्धेनावर्तमानत्वम् । नातो धूमत्वाभावस्यैव कालिकसम्बन्धेनाश्रये

---

घटादौ धूमत्वस्यैवावृत्तेरिति भावः । साध्यतावच्छेदकताघटकसम्बन्धेन हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकस्याभावविवक्षणे धूमत्वप्रकारकप्रमाविशेष्यवान् वह्नेरित्यत्रातिव्याप्तिः । वह्निमन्निष्ठसाध्याभावस्य तादृशविशेष्याभावस्य प्रतियोगितावच्छेदकताया लाघवेन धूमत्व एव कल्पनीयतया धूमत्वप्रकारकप्रमाविशेष्यत्वरूपसाध्यतावच्छेदकताघटकीभूतस्वरूपसम्बन्धात्मकव्यधिकरणसम्बन्धेन तादृशधूमत्वाभाववति धूमे धूमत्वप्रकारकप्रमाविशेष्यत्वस्य वृत्तित्वात् तादृशधूमादाववर्त्तमानगगनादिभिन्नत्वस्य निरुक्तसाध्यतावच्छेदके सत्त्वादित्याह—**तत्तुच्छमित्यादि** । **धूमत्वेति** । धूमत्वं प्रकारो यत्र प्रमायां तादृशप्रमाविशेष्यवानित्यर्थः । अतिव्याप्तिं सम्पादयति **लघुतयेति** । **स्वरूपसम्बन्धेनेति** । व्यधिकरणेत्यादिः । तादृशेति । धूमत्वप्रकारकेत्यर्थकम् ।

तद्वदवृत्तित्वञ्च = हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकाभाववदवृत्तित्वञ्च । तद्वति=तादृशप्रतियोगितावच्छेदकाभावाधिकरणे । अवर्त्तमानत्वम्=वृत्तित्वाभावः । स्वरूपसम्बन्धेन तादृशप्रतियोगितावच्छेदकाभावाधिकरणत्वविवक्षायाः फलमाह—**नात इति** । तथा च धूमवान्

---

धूमत्वप्रकारकेति । न च विषयितया रूपत्ववज्ज्ञानाभावमादाय रूपवान् पृथिवीत्वादित्यत्राव्याप्तिसम्भवे अतिव्याप्तिदानमसंगतमिति वाच्यम्, पारिभाषिकावच्छेदकत्वलक्षणस्यातिव्याप्तिदोषस्यैव गुरुतया तस्यैवाभिहितत्वात् अव्याप्त्यनभिधानेऽपि क्षत्यभावादिति केचित् । **परे तु** वह्नित्वप्रतियोगिकसमवायसम्बन्धेन वह्नित्वविशिष्टस्य संयोगेन साध्यतायां धूमहेतावव्याप्तिभिया हेतुसमानाधिकरणाभावस्य साध्यतावच्छेदकताघटकसंसर्गातिरिक्तसम्बन्धावच्छिन्नत्व साध्यतावच्छेदकनिष्ठत्वोभयाभाववदवच्छेदकताकप्रतियोगिताकत्वेन विवक्षणीयतया विषयितया रूपत्ववज्ज्ञानाभावस्य लक्षणाघटकत्वादव्याप्त्यसम्भवेऽतिव्याप्त्यभिधानम् । न च

धूमे समवायेन, स्वरूपसम्बन्धेन च तदाश्रये स्पन्दादा कालिकविशेषणतया धूमत्वस्य वर्तमानत्वादवच्छेदकत्वहानिः ।

---

वह्नेरित्यादौ वह्निमन्निष्ठाभावप्रतियोगितावच्छेदकधूमत्वाभावस्य येन केनापि कालिकसम्बन्धेनाधिकरणे धूमे धूमत्वस्य साध्यतावच्छेदकताघटकसमवायसम्बन्धेन वर्त्तमानतया तादृशधूमेऽवर्त्तमानगगनत्वादिभिन्नत्वस्य धूमत्वरूपसाध्यतावच्छेदके सत्त्वादतिव्याप्तिः स्यात् यदि स्वरूपसम्बन्धेन तादृशप्रतियोगितावच्छेदकाभावाधिकरणत्वप्रवेशो न स्यादिति भावः । साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नवृत्तित्वविवक्षायाः फलमाह स्वरूपसम्बन्धेनेति । धूमवान् वह्नेरित्यादौ तादृशधूमत्वाभावस्य स्वरूपेणाधिकरणे स्पन्दादौ धूमत्वस्य कालिकसम्बन्धेन वृत्तित्वात् तादृशस्पन्दादौ कालिकेनावर्त्तमानगगनादिभिन्नत्वस्य धूमत्वे सत्त्वात् तत्रैवातिव्याप्तिः स्यात् यदि तादृशप्रतियोगितावच्छेदकाभावाधिकरणनिरूपितवृत्तित्वं साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नं न स्यादिति हृदयम् । अभावोऽपि तादृशवृत्तित्वसामान्याभावो बोध्यः, तेन वह्निमान् धूमादित्यादौतादृशप्रतियोगितावच्छेदकघटत्वादेरभाववति पटादौ वह्नित्वस्यावर्त्तमानत्वेऽपि न क्षतिः। न च स्वरूपसम्बन्धेन प्रतियोगितावच्छेदकाभावाधिकरणत्वविवक्षणे घटभेदविशिष्टस्य समवायेन साध्यतायां प्रमयेत्वहेतावतिव्याप्तिः, साध्याभावप्रतियोगितावच्छेदकघटभेदाभावस्य घटत्वस्य स्वरूपेणाधिकरणाप्रसिद्धेरिति वाच्यम् ? साध्याभावप्रतियोगितावच्छेदकताया लाघवेन सत्तात्त्वे कल्पनीयतया अतिव्याप्त्यसम्भवादिति ध्येयम् ।

---

विषयितया गुणत्वविशिष्टाभावमादाय तथाप्यव्याप्तिरिति वाच्यम् , साध्यतावच्छेदकताघटकसंसर्गातिरिक्तसम्बन्धावच्छिन्नत्व साध्यतावच्छेदकव्यापकनिष्ठत्वोभयाभाववदवच्छेदकताकप्रतियोगिताकत्वस्य तादृशाभावे विवेक्षणीयत्वात् । न च तथापि तद्व्यक्त्यनुयोगिकस्वरूपसम्बन्धेन प्रमेयत्ववतः साध्यतायां व्यभिचारिण्यतिव्याप्तिः, साध्याभावप्रतियोगितावच्छेदकतायाः लाघवेन तद्व्यक्तित्वनिष्ठतया साध्याभावस्य लक्षणाघटकत्वादिति वाच्यम् ? तादृशातिरिक्तसम्बन्धावच्छिन्नत्व–साध्यतावच्छेदकाभाववद्वृत्तित्वे सति साध्यतावच्छेदकव्यापकनिष्ठत्वोभयाभाववदवच्छेदकताकप्रतियोगिताकत्वस्य तादृशाभावे निवेशनीयत्वादित्याहुः ।

न च तथापि समवायेन प्रमेयस्य साध्यतायां भावत्वादिहेतावति-व्याप्तिः, प्रमेयत्वरूपस्यावच्छेदकस्याभावाप्रसिद्ध्या प्रमेयाभावस्य लक्षणा-घटकत्वादिति वाच्यम् ? हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्धर्मान्यून-वृत्ति तत्त्वस्यैव विवक्षितत्वात । अत एव समवायेन सत्ताश्रयस्य साध्य-

---

नचेति वाच्यमिति परेणान्वयः । भावत्वादीति । व्यभिचा-रिणीत्यादिः । आदिना वाच्यत्वादिपरिग्रहः । अतिव्याप्तिं योजयति प्रमेयत्वरूपस्येत्यादि । अवच्छेदकस्य = हेतुसमानाधिकरणसाध्या-भावप्रतियोगितावच्छेदकस्य । लक्षणाघटकत्वादिति । तथा च हेतुसमानाधिकरणघटाभावप्रतियोगितावच्छेदकस्य घटत्वस्याभाववति प्रमेयत्वस्य वर्त्तमानत्वात् समवायेन प्रमेयसाध्यकभावत्वादिहेतौ भवत्यतिव्याप्तिरिति भावः । यद्धर्मान्यूनवृत्ति = यद्धर्मव्यापकम्, तत्त्वस्यैव=तद्धर्मत्वस्यैव । एवकारात् तादृशप्रतियोगितावच्छेदकाभाव-वदवृत्तित्वस्य पारिभाषिकावच्छेदकतात्मकत्वव्यवच्छेदः । विवक्षि-तत्वादिति । प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वशब्देनेत्यादिः । निरु-क्तविवक्षायां प्रमेयवान् भावत्वादित्यादौ नातिव्याप्तिः, भावत्वादि-समानाधिकरणस्य समवायेन प्रमेयाभावस्य प्रतियोगितावच्छेदकं यत् प्रमेयत्वम् तस्य प्रमेयत्वव्यापकतया यद्धर्मपदेन प्रमेयत्वस्य धर्त्तुं शक्य-त्वात्, तस्यैव साध्यतावच्छेदकस्य पारिभाषिकावच्छेदकत्वसम्भवादिति हृदयम् ।

पूर्वोक्तरीत्या हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकस्याभा-वाधिकरणनिरूपितसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नवृत्तित्वाभा-

---

अत्र साध्यतावच्छेदकताघटकसम्बन्धेन प्रतियोगितावच्छेदकाभाववति प्रतियो-गितावच्छेदकताघटकसम्बन्धेनावृत्तित्वविवक्षणान्न धूमत्वप्रकारकप्रमाविशेष्यवान् वह्ने-रित्यत्रातिव्याप्तिः, स्वरूपेण धूमत्वाभाववति धूमे समवायेन धूमत्वप्रकारकप्रमा-विशेष्यत्वस्यावृत्तेरिति चेन्न ? वह्नित्वप्रकारकप्रमाविशेष्यवान् धूमादित्यत्राव्याप्त्या-पत्तेः । हेतुमन्निष्ठप्रतियोगितावच्छेदकतार्णत्वाद्यभाववति समवायेन वह्नित्वप्रकारक-प्रमाविशेष्यत्वस्यावृत्तित्वात् । न च तादृशान्यतरसम्बन्धेनावृत्तित्वविवक्षणान्नाव्या-प्तिरिति वाच्यम् ? निरुक्तधूमत्वप्रकारकप्रमाविशेष्यवान् वह्नेरित्यत्रातिव्याप्ते-र्दुर्वारत्वादिति ध्येयम् ।

त्वेऽपि तादृशावच्छेदकोभूतस्य सत्त्वस्याभाववति सामान्यादौ साध्यतावच्छेदकताघटकीभूतसमवायसम्बन्धेन वृत्तेरप्रसिद्धावपि भावत्वादिहेतौ नातिव्याप्तिः ।

---

ववत एव पारिभाषिकावच्छेदकत्वविवक्षणे सत्तावतः समवायेन साध्यतायां भावत्वादिहेतावतिव्याप्तिः । हेतुसमानाधिकरणसत्तावद्भावप्रतियोगितावच्छेदकीभूतायाः सत्तायाः प्रतियोगितावच्छेदकताघटकसमवायेनाभाववति सामान्यादौ साध्यतावच्छेदकताघटकसमवायसम्बन्धावच्छिन्नवृत्तित्वाप्रसिद्धया साध्याभावरूपसत्तावद्भावस्य लक्षणाघटकत्वात्, तादृशाभावान्तरप्रतियोगितावच्छेदकस्य घटत्वादेरभाववति च साध्यतावच्छेदकीभूतायाः सत्ताया वृत्तेरित्याहात एवेति । निरुक्तत्वस्य पारिभाषिकावच्छेदकत्वविवक्षणादेवेत्यर्थः । तादृशेति । हेतुसमानाधिकरणाभावीयप्रतियोगितावच्छेदकीभूतस्य सत्त्वस्याभाववति सामान्यादाविति शेषः । अप्रसिद्धावपीति । यद्यपि साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नवृत्तिताप्रतियोगिकस्वरूपसम्बन्धेन तादृशप्रतियोगितावच्छेदकाभाववद्वृत्तित्वाभावविवक्षणे नाप्रसिद्धिप्रयुक्तातिव्याप्तिः, तादृशस्वरूपसम्बन्धेन सामान्यादिवृत्तित्वाभावस्य सर्वत्र सत्त्वादित्युच्यते तथापि प्रमेयवान् भावत्वादित्यादावतिव्याप्तिवारणाय यथोक्तविवक्षायाः सर्वथावश्यकत्वात् तत एव सत्ताश्रयसाध्यकव्यभिचारिण्यतिव्याप्तिवारणसम्भवे निरुक्तरीत्या वृत्तित्वाभावविवक्षणमनुचितमिति ध्येयम । नातिव्याप्तिरिति । हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकीभूतायाः सत्तायाः साध्यतावच्छेदकसत्ताव्यापकतया यद्धर्मपदेन साध्यतावच्छेदकस्यैव धर्त्तुं शक्यत्वान्नातिव्याप्तिरिति भावः ।

---

ननु धूमत्वप्रकारकप्रमाविशेष्यवान् वह्नेरित्यत्र हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकस्यायोगोलकावृत्तित्वस्य साध्यतावच्छेदकताघटकीभूतस्वरूपेणाभाववति वह्न्यादौ स्वरूपेण धूमत्वप्रकारकप्रमाविशेष्यत्वस्यावृत्तित्वात् कथमतिव्याप्तिसंगतिरिति चेदत्र केचित्, धूमत्वप्रकारकप्रमाविशेष्यत्वप्रतियोगिकस्वरूपसम्बन्धस्यैव साध्यतावच्छेदकताघटकसम्बन्धत्वं वाच्यम्, तथा च तादृशसम्बन्धेन अयोगोलकावृत्तित्वाभाववति धूमे स्वरूपेण धूमत्वप्रकारकप्रमाविशेष्यत्वस्य वृत्तेः अतिव्याप्तिसंगतिरित्याहुः । अन्ये तु तादात्म्येन धूमवतः संयोगेन साध्यत्वे वह्निहेता-

इदं तु चिन्त्यते—तादृशप्रतियोगितावच्छेदकानतिरिक्तवृत्तिभिन्नत्वापेक्षया नञर्थद्वयाप्रवेशेन लाघवात्तादृशावच्छेदकं यद्यत्तत्प्रत्येकातिरिक्तवृत्तित्वं साध्यतावच्छेदकस्य विशेषणं वक्तुमुचितमिति ।

---

यथाश्रुतं हि प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकाभाववद्वृत्तिभिन्नं यत् साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति दीधितिकारोक्तं व्याप्तिलक्षणं पर्यवसितम् । तत्र तादृशवृत्तित्वाभावरूपैकनञर्थप्रवेशेन तादृशवृत्तित्वाभाववद्भिन्नत्वरूपनञर्थान्तरप्रवेशेन च गौरवमतो लाघवात् हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं यत् यत् तत्प्रत्येकाभावकूटवन्निरूपितवृत्तितावत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यमेव हेतौ व्याप्तिरित्येवं युक्तम् । वह्निमान् धूमादित्यादौ धूमसमानाधिकरणाभावप्रतियोगितावच्छेदकघटत्वादीनां यावतामेव प्रत्येकाभावकूटवति वह्नौ वह्नित्वस्य वर्त्तमानत्वात् लक्षणसमन्वयः । धूमवान् वह्नेरित्यादौ तु वह्निमन्निष्ठाभावप्रतियोगितावच्छेदकधूमत्वाभावघटिततादृशकूटवति वह्न्यादौ धूमत्वस्यावृत्तित्वान्नातिव्याप्तिरित्याह—इदन्तु चिन्त्यत इत्यादि । तादृशेति । हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकाभाववद्वृत्तित्वाभाववद्भिन्नत्वापेक्षयेत्यर्थः—तादृशावच्छेदकं यत् यदिति । धूमवान् वह्नेरित्यादौ वह्निमन्निष्ठाभावप्रतियोगितावच्छेदकयत्किञ्चिद्घटत्वाद्यभाववति धूमत्वस्य वर्त्तमानत्वादतिव्याप्तिरतो यत् यदित्युक्तम् । तथा च तादृशप्रतियोगितावच्छेदकयावदन्तर्गतधूमत्वाभाववति धूमत्वस्यासत्त्वान्नातिव्याप्तिरिति भावः । वस्तुतो हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावकूटवन्निरूपितवृत्तितावत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति तु नञर्थद्वयाघटितं समुदितलक्षणं पर्यवसितमिति ध्येयम् ।

---

वतिव्याप्तिः, लाघवात् हेतुसमानाधिकरणसाध्याभावप्रतियोगितावच्छेदकस्य धूमत्वस्य साध्यतावच्छेदकताघटकतादात्म्येनान्योन्याभाववति धूमे तादात्म्येन साध्यतावच्छेदकीभूतधूमस्य वर्त्तमानत्वादित्यपि वदन्ति ।

स्वसमानवृत्तिकं चावच्छेदकं ग्राह्यम् । तत्त्वञ्च

ननु धूमादिमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्यद्वह्न्यादिनिष्ठं तार्णा-तार्णदहनोभयत्वं यावत्त्वं वा तदनतिरिक्तवृत्त्येव वह्नित्वादिकमिति व्याप्तिलक्षणमसम्भवीत्यत आह-स्वसमानेति । स्वमनतिरिक्तवृत्तित्वेना-

स्वसमानवृत्तिकञ्चेत्यादिदीधितिमवतारयति—नन्विति । धूमादिमति वर्त्तमानस्य यावद्वह्निर्नास्ति-तार्णातार्णोभयं नास्तीत्याद्याकारकाभावस्य प्रतियोगितावच्छेदकत्वह्निनिष्ठयावत्त्व-तार्णातार्णोभयत्वाद्यभाववति घटपटादौ वह्नित्वादिरूपसाध्यतावच्छेकदस्यावर्त्तमानत्वात् वह्निमान् धूमादित्यादावसम्भवः । न च वह्न्यादेरव्याप्यवृत्तितया तत्साध्यकस्थले प्रतियोगिवैयधिकरण्यप्रवेशस्यावश्यकतया तत एव तादृशयावत्त्वाद्यवच्छिन्नाभाववारणसम्भवे कथमसम्भवः सम्भवतीति वाच्यम् ? साध्यतावच्छेदकसम्बन्धसामान्ये यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्व-हेत्वधिकरणीभूतयत्किञ्चिद्वृत्त्यनुयोगिकत्वोभयाभावस्तादृशप्रतियोगितावच्छेदकाभाववद्वृत्तित्वस्यैव प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वान्तेन विवक्षितत्वात् यावत्त्वादेस्तादृशप्रतियोगितावच्छेदकपदेन धर्त्तुं शक्यत्वात् । नच यावत्त्वाद्यवच्छिन्नप्रतियोगिकत्वमप्रसिद्धमिति वाच्यम् ? प्रकारित्वादौ तत्प्रसिद्धेः स्वयमेवोक्तत्वात् । एवं तद्रूपवान् तद्रसादित्यादौ तद्रूपघटोभयाभावमादायैव लक्षणासङ्गतिरवसेयेत्याह—धूमादीति । अनतिरिक्त-

अथोक्तलक्षणे वह्निमान् धूमादित्यत्राव्याप्तिः धूमसमानाधिकरणसाध्यतावच्छेदकतदितरोभयानवच्छिन्नप्रतियोगिताकस्यमहानसीयतेजोऽभावस्य तार्णद्रव्याऽभावस्य च प्रतियोगितावच्छेदकं यत् तेजस्त्वं द्रव्यत्वञ्च तदभाववति वह्नित्वस्यावर्त्तमानत्वात् साध्यतावच्छेदकस्यैव पारिभाषिकावच्छेदकत्वसम्भवात् । न च हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिप्रतियोगिताकभेदवदवृत्तित्वविवक्षणान्नातिव्याप्तिरिति वाच्यम् ? स्वसमानवृत्तिकत्वविशेषणस्य व्यर्थतापत्तेः । तार्णातार्णोभयभेदवति वह्नौ वह्नित्वस्य वृत्तित्वादेव वह्निमान् धूमादित्यादावसम्भववारणसम्भवादिति चेन्न ? तादृशरूपवृत्तिनिरूपकताकाधिकरणत्वाभाववन्निरूपितवृत्तितानवच्छेदकस्यैव पारिभाषिकावच्छेदकत्वात् । वृत्तित्वञ्च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्ब-

भिमतम् । तथा च स्वसमानवृत्तिकं यद्धेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं तदनतिरिक्तवृत्तित्वमर्थः । यावत्त्वस्य वह्नित्वव्यापकत्वेऽपि वह्नित्वसमानवृत्तिकत्वाभावादेव न तस्य तादृशावच्छेदकत्वमिति भावः ।

ननु स्वसमानवृत्तिकत्वं स्वान्यूनातिरिक्तवृत्तित्वम्, तथा च वह्निनिष्ठयावत्त्वादेरपि समवायादिना वह्नित्वादिसमानवृत्तित्वमेवातः

वृत्तित्वेन = हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकाभाववदवृत्तित्वेन । अभिमतम् = अभिप्रायविषयीभूतम् अभिमानविषयीभूतं वा । समुदितलक्षणार्थमाह—तथा चेति । तदनतिरिक्तवृत्तित्वम् = तदभाववदवृत्तित्वम् । अर्थ इति । तथा च स्वसमानवृत्तिकं यद्धेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं तदभाववदवृत्तियत् स्वं तदेव पारिभाषिकावच्छेदकम्, तद्भिन्नत्वं साध्यतावच्छेदके विवक्षणीयम् । वह्निमान् धूमादित्यादौ वह्निनिष्ठयावत्त्वादेः हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वेऽपि तस्य वह्नित्वसमानवृत्तिकत्वाभावात् वह्नित्वसमानवृत्तिकहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकस्याप्रसिद्धया स्वपदेन वह्नित्वस्योपादातुमशक्यतया घटत्वादिकं तादृशयावत्त्वादिकं वा स्वपदेनोपादाय तत्समानवृत्तिकहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतादृशयावत्त्वाद्यभाववति अवर्त्तमानं यत् स्वं तादृशघटत्वयावत्त्वादिकं, तद्भिन्नत्वस्य साध्यतावच्छेदके वह्नित्वादौ सत्त्वान्नासम्भवः । धूमवान् वह्नेरित्यादौ धूमत्वसमानवृत्तिकवह्निमन्निष्ठाभावप्रतियोगितावच्छेदकधूमत्वाभाववत्यवर्त्तमानं यत् स्वं धूमत्वं तदन्यत्वस्य साध्यतावच्छेदकीभूते धूमत्वे विरहान्नातिव्याप्तिरिति भावः ।

स्वसमानवृत्तिकत्वं यदि स्वव्यापकत्वे सति स्वाभाववदवृत्तित्वरूपं तदा वह्निनिष्ठयावत्त्वादेरपि समवायसम्बन्धेन वह्नित्वव्यापकतया वह्नित्वाभाववदवृत्तित्वेनच वह्नित्वसमानवृत्तिकत्वापत्त्याऽसम्भवतादवस्थ्यं स्यादतस्तादृशयावत्त्वादेः वह्नित्वादिसमानवृत्तिकत्वाभाव दीधितिकारोक्तं

न्धेन । एवञ्च महानसीयत्वतेजस्त्वगतद्वित्ववृत्तिनिरूपकताकमहानसनिष्ठाधिकरणत्वाभाववत्पर्वतनिरूपितवृत्तितानवच्छेदकत्वस्य वह्नित्वे विरहान्न वह्निमान् धूमादित्यादावव्याप्तिः । न चैवं सत्तावान् जातेरित्यत्र विशिष्टसत्त्वाभावमादायवक्ष्यमाणाऽव्याप्तिदानमसंगतमिति वाच्यम् ? विशिष्टसत्तात्वावच्छिन्नाधेयत्वस्यातिरिक्तत्वात् ।

स्वपर्य्याप्त्यधिकरणपर्याप्तिवृत्तिकत्वम् ।

आह—तत्त्वं चेति । स्वसमानवृत्तिकत्वं चेत्यर्थः । स्वपर्याप्तीति । न च वह्नित्वपर्याप्त्यधिकरणे यावत्येव वह्नौ वह्निवृत्तियावत्त्वादेः पर्याप्तत्वाद्वह्नित्वस्यावच्छेदकत्वं दुर्वारमिति वाच्यम् ? स्वपर्याप्त्यवच्छेदकधर्मावच्छिन्नपर्याप्तिकत्वस्योक्तत्वात् । वह्नित्वपर्याप्त्यवच्छेदकी-

व्यवस्थापयितुं शङ्कते—नन्विति । स्वान्यूनेति । स्वव्यापकत्वे सति स्वाभाववदवृत्तित्वरूपमित्यर्थः । पर्याप्तिसम्बन्धेन वह्निनिष्ठयावत्त्वादेर्वह्नित्वादिव्यापकत्वाद्यसम्भवादाह—समवायादिनेति । आदिना स्वरूपादिपरिग्रहः । ननु स्वपर्याप्त्यधिकरणपर्याप्तिप्रतियोगित्वं यदि स्वसमानवृत्तिकत्वं तदा वह्निमान् धूमादित्यादौ पुनरव्याप्तिः स्यात् वह्नित्वपर्याप्त्यधिकरणे तत्तद्वह्नौ यावत्येव वह्निनिष्ठयावत्त्वादेः पर्याप्तिसम्बन्धेन वर्त्तमानत्वात्, स्वपदेन वह्नित्वस्योपादातुं शक्यतया वह्नित्वपर्याप्त्यधिकरणपर्याप्तिकहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकवह्निनिष्ठयावत्त्वाभाववत्यवर्त्तमानत्वस्य वह्नित्वे सत्त्वादित्याशङ्कते—न चेति । वाच्यमिति परेणान्वयः—अवच्छेदकत्वमिति । पारिभाषिकमित्यादिः । तथा च अव्याप्तिरिति भावः । समाधत्ते—स्वपर्याप्त्येति । स्वपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नपर्याप्तिप्रतियोगित्वस्योक्तत्वादित्यर्थः—यावत्त्वादेरपर्याप्तत्वादिति । तथा च न वह्निमान् धूमादित्यादावव्याप्तिः वह्नित्वपर्याप्त्यनुयोगितावच्छेदकतत्तद्वह्नित्वावच्छिन्नपर्याप्तिकत्वस्य वह्निनिष्ठयावत्त्वादौ विरहात् यावत्त्वादेः यावत्त्वावच्छेदेनैव पर्याप्तत्वादिति वह्नित्वस्य स्वपदेन धर्त्तुमशक्यतया तादृशस्वसमानवृत्तिकहेतुसमानाधिकरणाभावप्रतियोगिताकघटत्वयावत्त्वाद्यभाववत्यवर्त्तमानघटत्वयावत्त्वादिभिन्नत्वस्य वह्नित्वेऽनपायादित्याशयः ।

न चैतदप्रामाणिकं ? सिद्धान्तलक्षणे स्वयमुक्तत्वादिति ध्येयम् । यद्वा तादृशरूपवृत्तिनिरूपकत्वावच्छिन्ननिरूपकतानिरूपिताधिकरणत्वाभाववद्वृत्तितानवच्छेदकत्वविवक्षणान्नोक्ताऽव्याप्तिदानाऽसंगतिः, तादृशरूपवृत्तिनिरूपकत्वावच्छिन्ननिरूपकतानिरूपिताधिकरणत्वस्य द्रव्यगुणकर्मसु सत्त्वात् तदभाववद्वृत्तितानवच्छेदकत्वस्य सत्तात्वे सत्त्वादिति तु विभावनीयम् ।

भूततत्तद्वह्नित्वावच्छेदेन यावत्त्वादेरपर्याप्तत्वात् । न चैवमनतिरिक्तवृत्तित्व-वैयर्थ्यम् , वह्नित्वपर्याप्त्यवच्छेदकधर्मावच्छिन्नपर्याप्तिकतत्तद्वह्न्यन्यतर-त्वादिकमादाय वह्नित्वस्यापि पारिभाषिकावच्छेदकत्वापत्तेरिति भावः ।

---

एवं=स्वसमानवृत्तिकत्वस्य हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकविशेषणत्वे । **अनतिरिक्तेति** । तादृशप्रतियोगितावच्छेदकाभाववदवृत्तित्वांशस्य वैयर्थ्यमित्यर्थः । न चैवमिति पूर्वेणान्वयः । तथा च स्वपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नपर्याप्तिकहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकसमानाधिकरणं यत् स्वं तदेव पारिभाषिकावच्छेदकं तदन्यत्वं साध्यतावच्छेदकविशेषणम् । यावत्त्वताणतार्णोभयत्वादिकन्तु न वह्नित्वसमानवृत्तिकमिति वह्नित्वस्य स्वपदोपात्तत्वाऽसम्भवात् वह्निमान् धूमादित्यादावसम्भववारणसम्भवे तादृशप्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वांशनिवेशो निरर्थक इति पूर्वपक्षस्याभिप्रायः । उत्तरयति—**वह्नित्वेति** । वह्नित्वपर्याप्त्यनुयोगितावच्छेदकतत्तद्वह्नित्वावच्छिन्नपर्याप्तिकमित्यर्थः । तत्तद्वह्न्यन्यतरत्वादिकं=पर्वतीयवह्निमहानसीयवह्न्यन्यतरत्वादिकम् । आदिना तत्तद्वह्न्यन्यतमत्वादिपरिग्रहः—**पारिभाषिकावच्छेदकत्वापत्तेरिति** । अयमभिप्रायः, यदि स्वपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकसमानाधिकरणं यत् स्वं तदेव पारिभाषिकावच्छेदकमित्युच्यते, तदा वह्निमान् धूमादित्यत्राव्याप्तिः, स्वपदेन वह्नित्वमुपादाय तत्पर्याप्त्यनुयोगितावच्छेदकतत्तद्व्यक्तित्वावच्छिन्नपर्याप्तिकं यत् धूमाधिकरणचत्वरादिमन्निष्ठस्य महानसीयवह्निपर्वतीयवह्न्यन्यतराभावस्य प्रतियोगितावच्छेदकं महानसीयवह्निपर्वतीयवह्न्यन्यतरत्वं,तत्सामानाधिकरण्यस्य वह्नित्वे सत्त्वात् वह्नित्वस्यापि पारिभाषिकावच्छेदकत्वापत्तिः । अतस्तादृशप्रतियोगितावच्छेदकाभाववदवृत्ति-

---

यद्धर्मन्यूनवृत्तीति । अत्र व्यापकत्वमिदानीं प्रतियोगितावच्छेदकताघटकसम्बन्धेन बोध्यम् । व्यापकताघटकयद्धर्मवत्त्व यदि साध्यतावच्छेदकताघटकसम्बन्धेन निवेश्यते तदा वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टस्य संयोगेन साध्यतायां धूमहेतावव्याप्तिः, तादृशसाध्यतावच्छेदकताघटकसम्बन्धेन घटत्वादेर्वैशिष्ट्याऽप्रसिद्ध्या पारिभाषिकावच्छेदकाप्रसिद्धेः । नच प्रतियोगितावच्छेदकताघटकसम्बन्धेन

यावत्त्वादिकन्तु न तथा । पर्य्याप्तिश्च अयमेको घट इमौ द्वाविति प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेष एव ।

---

यावत्त्वादिकमिति । आदिना तार्णाऽतार्णोभयत्वादिसंग्रहः । न तथेति । न वह्नित्वपर्याप्त्यधिकरणपर्याप्तिवृत्तिकमित्यर्थः । ननु पर्याप्तिः समवायः, स च तार्णातार्णोभयत्वादावप्यक्षत एवेत्यत आह—पर्याप्तिश्चेति । अयमेकः घट इति एकमात्रवृत्तिधर्मावच्छेदेन घटत्वस्य पर्याप्तिं दर्शयितुम्, इमौ द्वावित्युभयमात्रवृत्तिधर्मावच्छेदेन द्वित्वस्य पर्याप्तिं दर्शयितुम् । अन्यथा द्वौ द्वित्व-

---

त्वरूपानतिरिक्तवृत्तित्वांशोऽवश्यं निवेशनीयः, तथा सति न वह्निमान् धूमादित्यादावव्याप्तिः । वह्नित्वसमानवृत्तिकत्वस्य तादृशप्रतियोगितावच्छेदकीभूततत्तद्वह्न्यन्यतरत्वे सत्त्वेऽपि तत्तद्वह्न्यन्यतरत्वाभाववति चत्वरीयवह्नौ वह्नित्वस्य वर्त्तमानतया स्वपदेन वह्नित्वस्य धर्त्तुमशक्यत्वात् तादृशान्यतरत्वस्य स्वपदोपात्तत्वेऽपि तद्भिन्नत्वस्य वह्नित्वे सत्त्वादिति ।

यावत्त्वादिकमितीति । वह्निनिष्ठेत्यादिः । आदिना तार्णातार्णोभयत्वादिसंग्रह इत्यत्रादिपदात् वह्निघटोभयत्वादिपरिग्रहः । न वह्नित्वेति । स्वमते तु न वह्नित्वपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नपर्याप्तिकमित्यर्थो वक्तव्यः । पर्याप्तेः समवायात्मकत्वे समवायस्य एकत्वात् वह्नित्वपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नपर्याप्तिकत्वस्य तार्णातार्णोभयत्वादौ सत्त्वात् स्वपदेन वह्नित्वमादाय पुनरसम्भवः स्यादतो दीधितिकारोक्तं पर्याप्तेः समवायवैलक्षण्यं प्रदर्शयितुं शङ्कते—नन्विति । स च=समवायश्च । अक्षत एवेति । प्रतियोगितासम्बन्धेनेत्यादिः—एकमात्रवृत्तीति । स्वप्रतियोगिवृत्तित्व-स्वाऽनुयोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टं यत् तदन्यधर्मावच्छेदेनेत्यर्थः । तादृशो धर्मस्तत्तद्व्यक्तित्वरूपो बोध्यः । उभयमात्रेति । उभयमात्रे वर्त्तमानं यत्, तत्तद् द्वित्वं तदवच्छेदेनेत्यर्थः ।

---

यद्धर्मवैशिष्ट्याभिधानान्न दोष इति वाच्यम् ? तद्व्यक्त्यनुयोगिकस्वरूपसम्बन्धेन प्रमेयत्ववतः साध्यत्वे वाच्यत्वादिहेतावतिव्याप्त्यापत्तेः । साध्याभावप्रतियोगितावच्छेदकताया लाघवात् स्वरूपसम्बन्धेन तत्तद्व्यक्तित्व एव कल्पनीयतया प्रतियोगिताव-

वानिति प्रतीत्योरविशेषप्रसङ्गादिति भावः । न चायमेक इत्यादिप्रतीतेः समवायेनैवोपपत्तौ एकत्ववह्नित्वादेः पर्याप्तिसम्बन्धसत्त्वे मानाभावात्ताद्रूप्येण साध्यतायां व्यभिचारिण्यतिव्याप्तिरिति वाच्यम् ? इदन्त्वावच्छिन्ने एव वह्नित्वमेकत्वं च पर्याप्तं न तु द्वित्वमित्याद्यनुभवादेव तदभ्युपगमादिति भावः ।

---

अन्यथा = पर्याप्तेः समवायात्मकत्वे । अविशेषप्रसङ्गादिति । द्वौ इत्याकारकप्रत्ययो यदि द्वित्ववानित्याकारकप्रत्ययाभिन्नः स्यात् तदा एकमात्रवृत्तिधर्मावच्छिन्नविषयकोऽपि स्यात्, न चेष्टापत्तिः गगनं द्वे इति प्रतीत्यनुदयादिति भावः । ननु वह्निमान् द्रव्यत्वादित्यत्रातिव्याप्तिः वह्नित्वपर्याप्तौ मानाभावेन स्वपदेन वह्नित्वोपादानासम्भवात् स्वसमानवृत्तिकहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकघटपटोभयत्वाभाववदवृत्ति यत् स्वं घटपटोभयत्वं तदन्यत्वस्य वह्नित्वे सत्त्वात् । न च वह्नित्वैकत्वादेः पर्याप्तिरस्ति मानाभावात्, अयमेक इत्यादिप्रत्ययस्य समवायेनैवोपपत्तिसम्भवादित्याशङ्कते—नचायमित्यादि । ताद्रूप्येण = वह्नित्वादिरूपेण । व्यभिचारिणि = द्रव्यत्वादौ । समाधत्ते - इदन्त्वेति । तदभ्युपगमात् = एकत्ववह्नित्वादेः पर्याप्त्यभ्युपगमात् । एवञ्च न वह्निमान् द्रव्यत्वादित्यादौ अतिव्याप्तिः, वह्नित्वस्यैव स्वपदेन धर्त्तुं शक्यत्वादिति हृदयम् ।

त्रित्वादिकमित्यादिदीधितिमवतारयति—व्यासज्यवृत्तित्वेति । एकत्वानवच्छिन्नपर्याप्तिकत्व-तदन्यत्वान्यतररूपेणैवेत्यर्थः । स्वसमानवृत्तिकत्वोक्तावपीत्यर्थः । वह्नित्वादिवारणसम्भव इति । तथा च स्ववृत्ति यत् व्यासज्यवृत्तित्वतदन्यत्वान्यतरत् तद्वत् यत् हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं तदभाववदवृत्ति यत् स्वं तत् पारिभाषिकावच्छेदकं तदन्यत्वं साध्यतावच्छेदके विशेषणीयम । एवञ्च तार्णतार्णोभयाभावादिकमादाय न वह्निमान् धूमादित्यादावसम्भवः । वह्नित्ववृत्ति यत्

---

वच्छेदकताघटकस्वरूपसम्बन्धेन प्रमेयत्वव्यापकतायास्तद्व्यक्तित्वे विरहात् साध्याभावस्य लक्षणाघटकत्वात् । अत एव साध्यतावच्छेदकताघटकप्रतियोगितावच्छेदकताघटकान्यतरसम्बन्धेनैव यद्धर्मवैशिष्ट्योक्तौ न दोष इत्यपि परास्तम् । उक्तातिव्याप्तेरवारणादिति चेदत्रोच्यते—यत्यत्सम्बन्धेन यद्धर्मविशिष्टनिष्ठाऽभावा-

त्रित्वादिकमपि न द्वित्वादिसमानवृत्तिकमिति द्वित्वादिना सा-

व्यासज्यवृत्तित्वतदन्यत्वान्यतररूपेणैव स्वसमानवृत्तिकत्वोक्त्यापि वह्नित्वादिवारणसम्भवे स्वपर्याप्तीत्यादिपर्यन्तानुधावनस्य प्रयोजनमाह— त्रित्वादिकमिति। तथा च धूमवन्निष्ठाभावप्रतियोगितावच्छेदकस्य वह्निधूमघटत्रितयत्वस्य व्यासज्यवृत्तितया स्वसमानवृत्तिकस्य तस्यैवानतिरिक्तवृत्तित्वं वह्निधूमोभयत्वस्यापीति ताद्रूप्येण स्वसमानवृत्तिकत्वोक्तौ

व्यासज्यवृत्तिभिन्नत्वं तद्वत्त्वस्य तादृशतार्णोतार्णोभयत्वादौ विरहात्, वह्नित्वादेः स्वपदेन ग्रहणासम्भवात्, स्वसमानवृत्तिकतादृशघटत्वाद्यभाववद्वृत्तिघटत्वादिभिन्नत्वस्य वह्नित्वेऽनपायात्। प्रमेयधूमवान् वह्नेरित्यादौ प्रमेधूमत्ववृत्ति यत् तादृशान्यतरत् व्यासज्यवृत्तिभिन्नत्वं तद्वत्त्वस्य हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदके धूमत्वे सत्त्वात् प्रमेयधूमत्वस्यैव स्वपदोपात्तत्वान्नातिव्याप्तिरिति भावः। स्वसमानवृत्तिकत्वं यदि स्ववृत्ति यत् व्यासज्यवृत्तित्व-तदन्यत्वान्यतत्तद्वत्त्वं हेतुसमानाधिकरणाऽभावप्रतियोगितावच्छेदकविशेषणं तदा वह्निधूमोभयवान् धूमादित्यादावव्याप्तिः, वह्निधूमोभयत्वे वर्त्तमानं यत् तादृशान्यतरत् व्यासज्यवृत्तित्वं तदाश्रयीभूतं यत् हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं वह्निधूमघटैतत्त्रितयत्वं तदभाववति पटादौ वह्निधूमोभयत्वस्यावृत्तित्वात् स्वपदेन वह्निधूमोभयत्वस्यैव धर्त्तुं शक्यत्वात्। स्वपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नपर्याप्तिकत्वस्य स्वसमानवृत्तिकत्वरूपत्वे तु न तत्राव्याप्तिः? वह्निधूमोभयत्वपर्याप्त्यनुयोगितावच्छेदकद्वित्वावच्छेदेन वह्निधूमघटादिगतत्रित्वस्याप्तत्वात् वह्निधूमोभयत्वस्य स्वानन्तर्गतत्वात् तादृशत्रित्वस्य स्वपदोपात्तत्वेऽपि तद्भिन्नत्वस्य वह्निधूमोभयत्वेऽक्षतत्वादित्याह— तथा चेति। तस्यैव = तादृशत्रित्वस्यैव। अनतिरिक्तवृत्तित्वं = तदभाववदवृत्तित्वं। ताद्रूप्येण = व्यासज्यवृत्तित्वतदन्यत्वान्यतररूपेण।

प्रतियोगि प्रतियोगितावच्छेदकत्वघटकसम्बन्धेन हेतुमन्निष्ठाऽभावप्रतियोगितावच्छेदकम् तत्तत्सम्बन्धावच्छिन्नावच्छेदकताकविशेष्यताभिन्नसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकविशेष्यतावच्छेदकसाध्यतावच्छेदकाऽवच्छिन्नसामानाधिकरण्य व्याप्तिः, तथा च न कोऽपि दोष इति ध्येयम्।

ध्यतायां नाव्याप्तिः । घटकं चावच्छेदकत्वं स्वरूपसम्बन्धविशेषः ।

वह्निधूमोभयवान् धूमादित्यादावेव व्याप्तिलक्षणाव्याप्तिः स्यादिति भावः । यद्यपि तार्णातार्णोभयत्वाद्यवच्छिन्नाभावस्य प्रतियोगितावच्छेदकताघटकसम्बन्धः पर्याप्तिरेव, न तु समवायः तार्णमात्रसत्त्वेऽपि तार्णातार्णोभयं नास्तीति प्रतीतेः । तथा च प्रतियोगितावच्छेदकताघटकपर्याप्तिसम्बन्धेन तादृशोभयत्वाद्यभाववति प्रत्येकवह्नौ वृत्तिमत्त्वादेव वह्नित्वादेरवच्छेदकत्वासम्भवात् स्वसमानवृत्तिकेति व्यर्थम्, तथापि प्रत्येकवह्नौ पर्याप्तिसम्बन्धेनापि न तार्णातार्णोभयत्वादेरभावः किन्तु घटादावेव । अन्यथा तत्सम्बन्धेन प्रत्येकावृत्तिधर्मस्य तत्सम्बन्धेन समुदायावृत्तित्वनियमात् उभयत्रैव प्रत्येकं द्वित्वाभावसत्त्वादिमौ न द्वावित्यपि प्रतीत्यापत्तेः ।

वह्निमान् धूमादित्यादौ धूमादिमन्निष्ठतार्णातार्णोभयं नास्तीत्याद्याकारकाभावप्रतियोगितावच्छेदकताघटकसम्बन्धस्तु पर्याप्तिरेव न तु समवायः, समवायस्य तथात्वे केवलतार्णवति तार्णातार्णोभयं नास्तीति प्रतीत्यनुदयापत्तेः । तार्णमात्रेऽपि समवायसम्बन्धेन तार्णातार्णोभयत्वस्य विद्यमानतया केवलतार्णवति समवायसम्बन्धेन तादृशोभयत्वविशिष्टाधिकरणतायाः सत्त्वात् । एवञ्च प्रतियोगितावच्छेदकताघटकपर्याप्तिसम्बन्धेन तार्णातार्णोभयत्वाद्यभाववति तार्णवह्न्यादिमात्रे वह्नित्वादेर्वर्त्तमानत्वात् तस्य पारिभाषिकानवच्छेदकत्वेनासम्भववारणसम्भवे हेतुमन्निष्ठाभावप्रतियोगितावच्छेदके स्वसमानवृत्तिकत्वविशेषणोपादानं निरर्थकमित्याशङ्कते **यद्यपीति** । **अवच्छेदकत्वासम्भवादिति** । तादृशोभयत्वाद्यभाववत्यवर्त्तमानगगनादिभिन्नत्वस्य साध्यतावच्छेदकीभूतवह्नित्वादौ सत्त्वादिति हृदयम् । उत्तरयति **तथापीति** । प्रत्येकवह्नौ=तार्णवह्निमात्रे अतार्णवह्निमात्रे च । **तार्णातार्णोभयत्वादेरिति** । हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकः इत्यादिः । **अन्यथा**=प्रत्येकवह्नौ तादृशोभयत्वाभावाभ्युपगमे । **तत्सम्बन्धेन**=पर्याप्तिसम्बन्धेन । **प्रत्येकेति** । प्रत्येकवह्न्यादाववर्त्तमानस्य तादृशोभयत्वरूपधर्मस्येत्यर्थः । **समुदायेति** । तार्णातार्णोभयस्मिन्नसत्त्वनियमादित्यर्थः । **उभयत्रैव** । तादृशोभयोर्मध्य एव । **प्रत्येकं** तार्णमात्रे अतार्णमात्रे च । **प्रतीत्यापत्तेरिति** । तथाच तार्णातार्णोभयत्वस्य प्रत्येकवह्निवृत्तिताया

६

न चैवमयं द्वावित्यपि प्रत्यक्षप्रतीतिः प्रमा स्यात् , एकव्यक्तावपि द्वित्वस्य पर्याप्तिसम्बन्धेन सत्त्वादिति वाच्यम् ? मूलावच्छिन्नो वृक्षः कपिसंयोगीत्यादिप्रतीतेर्मूलावच्छेद्यसमवायेन कपिसंयोगाद्यवगाहित्ववदुक्त-प्रतीतेरपीदन्त्वावच्छेद्यपर्याप्तिसम्बन्धेनैव द्वित्वावगाहितया प्रमात्वायोगात् । एकव्यक्तेरिदन्त्वावच्छेद्यपर्याप्तिसम्बन्धेन द्वित्वरहितत्वात् । अत एवायं न

---

अवश्यं स्वीकरणीयतया तादृशोभयत्वाभाववति घटादौ वह्नित्वादेरवृत्ति-त्वादेव तस्य पारिभाषिकावच्छेदकत्वसम्भवादसम्भवस्स्यादतः स्वसमान-वृत्तिकत्वेन हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकमवश्यं विशेष-णीयमिति भावः ।

ननु एकव्यक्तावपि द्वित्वस्य पर्याप्तिसम्बन्धेन सत्त्वाभ्युपगमे पर्वतादौ तार्णातार्णोभयं नास्तीति प्रतीतेर्वक्ष्यमाणरीत्या वारणसम्भवेऽपि अयं द्वौ इत्याकारकप्रत्ययस्य प्रमात्वं स्यात् । एकव्यक्तौ पर्याप्तिसम्बन्धेन द्वित्वा-धिकरणतायाः सत्त्वेन तादृशप्रत्ययस्य द्वित्ववति द्वित्वप्रकारकत्वादित्या-शङ्कते **न चेति** । समाधत्ते **मूलावच्छिन्नविति** । अयं भावः, यथा मूलावच्छिन्नो वृक्षः कपिसंयोगीत्याकारकप्रतीतेर्मूलावच्छिन्नसमवाय-विषयकतया न प्रमात्वमपि तु भ्रमत्वमेव, वृक्षे कपिसंयोगस्य सत्त्वेऽपि मूलावच्छिन्नसमवायसम्बन्धेन तस्य तत्रावर्त्तमानतया निरुक्तप्रतीतेः मूलावच्छेद्यसमवायसम्बन्धेन कपिसंयोगाभाववति वृक्षे कपिसंयोग-प्रकारकत्वात्, तथा अयं द्वावित्याकारकप्रतीतेरपि इदन्त्वावच्छिन्नपर्याप्ति-सम्बन्धावगाहितया न प्रमात्वं, द्वित्वस्य पर्याप्तिसम्बन्धेन उभयत्वावच्छे-देनैव प्रत्येकवृत्तितया इदन्त्वरूपैकव्यक्तिमात्रवृत्तिधर्मावच्छिन्नपर्याप्ति-सम्बन्धेन एकव्यक्तौ द्वित्वस्यासत्त्वात् निरुक्तप्रतीतेरिदन्त्वावच्छेद्यपर्याप्ति-सम्बन्धेन द्वित्वाभाववदेकव्यक्तौ द्वित्वप्रकारकत्वस्यैव निर्विवादत्वादिति । **अत एवेति** । अयं द्वावितिप्रत्ययस्य इदन्त्वावच्छेद्यपर्याप्तिसम्बन्धावगा-हित्वादेवेत्यर्थः । **उपपद्यत इति** । अयं द्वावित्याकारकप्रतीतेः शुद्धपर्याप्त्य-वगाहित्वे अयं न द्वाविति प्रत्ययस्य प्रमात्वं नोपपद्यते, शुद्धपर्याप्तिसम्बन्धेन द्वित्वस्यैवैकव्यक्तौ सत्त्वात् तदभावस्य तत्रासत्त्वात् । नञ्सत्त्वे यत्र धर्मिणि येन सम्बन्धेन यस्यान्वयः नञसत्त्वे तेन सम्बन्धेन तत्र तदभाव-

द्वावित्यादिप्रतीतेः प्रमात्वमुपपद्यते । इदन्त्वावच्छेद्यपर्याप्तिसम्बन्धेन या द्वित्वस्याभावस्तद्वति तदवगाहित्वात् । न चेदन्त्वावच्छेद्यपर्याप्त्यप्रसिद्धिः ? एकत्ववन्हित्वादौ तत्सौलभ्यात् । एकत्वं वन्हित्वं चेदन्त्वावच्छिन्ने पर्याप्तं न तु द्वित्वादिकमित्यनुभवस्य सर्वसिद्धत्वात् । न चैकस्य द्वित्वपर्याप्त्यधिकरणत्वे घटद्वयशून्येऽपि गृहादावत्र घटाविति प्रतीतिः प्रमा स्यादिति वाच्यम् ? तद्गृहनिष्ठे घटे घटद्वयत्वावच्छेदेन तद्गृहवृत्तित्वविरहात् घटद्वयत्वावच्छेदेन तद्गृहवृत्तित्वावगाहिन्याः प्रोक्तप्रतीतेर्भ्रमत्वात् । अत

---

प्रत्ययादिति, अयं द्वावितिप्रत्ययस्येदन्त्वावच्छिन्नपर्याप्त्यवगाहित्वादेव अयं न द्वावितिप्रतीतेः प्रमात्वं सम्भवतीति हृदयम् । **तद्वति**=इदन्त्वावच्छेद्यपर्याप्तिसम्बन्धेन द्वित्वाभाववति । **तदवगाहित्वात्**=द्वित्वप्रकारकत्वात् । **न चेति** । अप्रसिद्धिरिति परेणान्वयः । इदन्त्वावच्छेद्यपर्याप्तिसत्त्वे अनुभवं प्रमाणयति **एकत्वमिति** । **नतु द्वित्वादिकमिति** । आदिना त्रित्वादिपरिग्रहः । द्वित्वादेरुभयाद्यवृत्तिधर्मावच्छेदेनैव पर्याप्तत्वादिति भावः ।

ननु व्यासज्यवृत्तिधर्मावच्छेदेन एकदेशवृत्तिधर्मात्यन्ताभावानभ्युपगमे उभयत्वावच्छेदेन एकव्यक्तौ द्वित्वसत्त्वाभ्युपगमे च घटद्वयशून्येऽपि भूतलादौ अत्र घटाविति शाब्दप्रत्ययस्य प्रमात्वं स्यात्, घटद्वयत्वावच्छेदेनैकघटे विभक्त्यर्थद्वित्वस्य भूतलादिवृत्तित्वस्य च सत्त्वात् इत्याशङ्कते **न चैकस्येति । द्वित्वपर्याप्त्यधिकरणत्व इति** । उभयत्वावच्छेदेनेत्यादिः । इति **प्रत्ययः**=इत्याकारकशाब्दप्रत्ययः, नतु प्रत्यक्षात्मकप्रत्ययः, घटद्वयादाविन्द्रियसंयोगस्यासत्त्वादिति ध्येयम् । असति बाधके उद्देश्यतावच्छेदकावच्छेदेनैव विधेयान्वयस्य व्युत्पत्तिसिद्धतया व्यासज्यवृत्तिधर्मावच्छेदेनैकदेशवृत्तिधर्मात्यन्ताभावाभ्युपगमेऽपि क्षतिविरहादित्याशयेन समाधत्ते तद्गृहनिष्ठे इत्यादि । **घटे**=एकघटे । **तद्गृहेति** । तद्गृहनिरूपितसप्तम्यर्थवृत्तित्वरूपविधेयविरहादित्यर्थः । **प्रागुक्तप्रतीतेः**=घटद्वयशून्ये गृहादावत्र घटाविति प्रतीतेः । **भ्रमत्वादिति** । घटद्वयत्वावच्छेदेन गृहवृत्तित्वाभाववति घटे गृहवृत्तित्वावगाहित्वादित्यर्थः ।

एव घटौ न तद्गृहनिष्ठावित्याकारकधीस्तत्र प्रमा। तद्गृहस्थितस्यापि घटस्य घटद्वयत्वावच्छेदेन तन्निष्ठत्वाभावसम्भवात्। घटपटयोर्न घटत्वमित्यादिप्रतीतेः प्रमात्वानुरोधेन व्यासज्यवृत्तिधर्मावच्छिन्नाधिकरणताकस्य प्रतियोगिमत्यपि तदभावस्य सर्वसम्मतत्वात्। न च घटत्वादौ घटपटोभयवृत्तित्वाभाव एवोक्तप्रतीतिविषयः ? सामान्यघटयोर्न समवायेन घटत्वमित्यादौ सामान्यघटोभयसमवेतत्वाप्रसिद्धया तदभावस्य भानासम्भवादिति सम्प्रदायविदः।

---

अत एव=उक्तप्रतीतेः घटद्वयत्वावच्छेदेन गृहवृत्तित्वाभावावगाहित्वादेव। तत्र=गृहादावेकघटसत्त्वदशायाम्।

तद्गृहस्थितस्यापि=घटद्वयशून्यैकघटवद्गृहस्थितस्यापि। तन्निष्ठत्वासम्भवात्=तादृशगृहवृत्तित्वासम्भवात्। तथा च घटद्वयशून्यैकघटवद्गृहे घटौ न स्तः इत्याकारकप्रतीतेर्घटद्वयत्वावच्छेदेन तादृशगृहवृत्तित्वाभाववति घटे तादृशगृहवृत्तित्वाभावप्रकारकतया प्रमात्वमिति भावः। ननु व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकैकदेशवृत्तिधर्मात्यन्ताभावानभ्युपगमात् कथं घटद्वयत्वावच्छेदेन तादृशगृहवृत्तित्वाभावावगाहिन्या निरुक्तप्रतीतेः प्रमात्वमत आह घटपटयोरिति। घटपटयोर्न घटत्वमित्याकारकप्रतीतेर्घटपटोभयत्वावच्छेदेन घटत्वाभावावगाहितयैव प्रमात्वं नान्यथा इत्यकामेनापि व्यासज्यवृत्तिधर्मावच्छिन्नाधिकरणताकैकदेशवृत्तिधर्मात्यन्ताभावोऽवश्यं स्वीकरणीय इति हृदयम्। ननूक्तप्रतीतेर्घटपटोभयनिरूपितसमवायावच्छिन्नवृत्तित्वाभाववद्घटत्वावगाहित्वेऽपि प्रमात्वसम्भवात् कथं व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकैकदेशवृत्तिधर्मात्यन्ताभावः स्वीकरणीय इत्याशङ्कते नचेति। उक्तप्रतीतिविषय इति परेणान्वयः। समाधत्त सामान्यघटयोरिति। जातिघटयोरित्यर्थः। सम्बन्धान्तरेण सामान्यघटोभयनिरूपितवृत्तित्वस्य प्रसिद्धिसम्भवात् समवायेनेत्युक्तम्। सामान्यघटविति। सामान्यघटोभयनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वाप्रसिद्धेरित्यर्थः। तदभावस्य=तादृशवृत्तित्वाभावस्य। भानासम्भवात्=विषयत्वासम्भवात्। सामान्यघटयोः समवायेन न घटत्व इत्याकारकप्रतीतेः सामान्यघटोभयत्वावच्छेदेन समवायावच्छिन्नप्रतियोगिताकघटत्वाभावावगाहितयैव प्रमात्वं, अनन्यगतिकत्वात्,

परे तु तदनतिरिक्तवृत्तित्वमत्र न तदभाववदवृत्तित्वम्, तथासति हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्वह्निधूमोभयत्वं प्रत्येकं तदभाववान्वह्निर्धूमश्चेति तदुभयवृत्तित्वस्यैव वह्निधूमोभयत्वे सत्त्वात् ताद्रूप्येण साध्यतायां वह्न्यादिहेतावतिव्याप्त्यापत्तेः। किन्तु तादृशप्रति-

---

इत्युक्तप्रतीतेः प्रमात्वानुरोधादेव व्यासज्यवृत्तिधर्मावच्छिन्नाधिकरणताकैकदेशवृत्तिधर्मात्यन्ताभावोऽभ्युपगन्तव्यः इत्यभिप्रायः। घटपटौ न घट इत्यप्रत्ययात् व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकाभावो न स्वीकर्त्तव्यः। न च घटपटयोर्न घटत्वमित्याकारकप्रतीतेः का गतिरिति वाच्यम्? तादृशप्रतीतेर्घटपटोभयनिरूपितवृत्तित्वाभावावगाहितयैवोपपत्तेः। सामान्यघटयोः समवायेन न घटत्वमित्याकारकप्रतीतेरपि समवायावच्छिन्नवृत्तिताप्रतियोगिकस्वरूपसम्बन्धेन सामान्यघटोभयवृत्तित्वाभावावगाहित्वेऽपि क्षत्यभावादित्यस्वरसः सम्प्रदायविद इत्युक्त्वा सूचित इति ध्येयम्।

प्रकारान्तरेण स्वसमानवृत्तिकत्वविशेषणापादानप्रयोजनमुपवर्णयतां केषाञ्चिन्मतमाह **परे त्विति**। **तदनतिरिक्तवृत्तित्वम्**=हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वम्। **न तदभावेति**। न तादृशप्रतियोगितावच्छेदकाभाववदवृत्तित्वम्। **तथा सति**=तदनतिरिक्तवृत्तित्वस्य तादृशप्रतियोगितावच्छेदकाभाववदवृत्तित्वरूपत्वे सति। तादृशप्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वं यदि तादृशप्रतियोगितावच्छेदकाभाववदवृत्तित्वं तदा वह्निधूमोभयवान् वह्नेरित्यत्रातिव्याप्तिः, वह्निमति वर्त्तमानस्य वह्निधूमोभयाभावस्य प्रतियोगितावच्छेदकं यद्वह्निधूमोभयत्वं प्रतियोगितावच्छेदकताघटकपर्याप्तिसम्बन्धेन तादृशोभयत्वाभाववति वह्नौ धूमे चोभयस्मिन् वह्निधूमोभयत्वस्य वृत्तित्वात् तादृशोभयावृत्तिगगनादिभिन्नत्वस्य साध्यतावच्छेदके वह्निधूमोभयत्वे सत्त्वात् इत्याह **हेतुमन्निष्ठेति**। **प्रत्येकं**=प्रत्येकवृत्तिधर्मावच्छेदेन। **तदभाववान्**=तादृशोभयत्वाभाववान्। **तदुभयवृत्तित्वस्य**=वह्निधूमोभयवृत्तित्वस्य। **ताद्रूप्येण**=वह्निधूमोभयत्वेन रूपेण।

**तादृशेति**। हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकवतीत्यर्थः।

---

हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्धर्मव्यापकमित्यस्यानुगमस्तु, हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकविशिष्टत्वं पारिभाषिकावच्छेदकत्वम्। वैशिष्ट्यम् आधेय-

योगितावच्छेदकवती यावती व्यक्तिस्तद्भेदकूटवदवृत्तित्वमेव तथात्वं वाच्यम् , तथा च वह्निमान्धूमादित्यत्राव्याप्तिरेव, तादृशावच्छेदकीभूतं यत्तार्णतार्णोभयत्वादिकं तद्वतो निखिलवह्नेः प्रत्येकभेदकूटवति वह्नित्व-

तद्भेदेति। तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवदवृत्तित्वमेवे-त्यर्थः। तथा=तदनतिरिक्तवृत्तित्वम्। वाच्यमिति। एवञ्च न वह्नि-धूमोभयवान् वह्नेरित्यत्रातिव्याप्तिः, वह्निमन्निष्ठाभावप्रतियोगितावच्छेद-कवह्निधूमोभयत्ववती यावद्वह्निव्यक्तिः धूमव्यक्तिश्च भवति, तावद्वह्नि-व्यक्तित्वावच्छिन्नभेदतावद्धूमव्यक्तित्वावच्छिन्नभेदकूटवति घटपटादौ वह्निधूमोभयत्वस्यावर्त्तमानत्वात् तादृशसाध्यतावच्छेदकस्यैव पारिभापि-कावच्छेदकत्वसम्भवात्। न चैवं तादृशप्रतियोगितावच्छेदकवति यावत्त्व-विशेषणं व्यर्थम् ? वह्निमन्निष्ठाभावप्रतियोगितावच्छेदकधूमत्ववद्यत्-किञ्चिद्धूमभिन्ने धूमान्तरे धूमत्वस्य वर्त्तमानत्वात् तस्य पारिभाषिका-नवच्छेदकत्वेन धूमवान् वह्नेरित्यादावतिव्याप्तिवारकतयैव तदुपादानस्य सार्थक्यसम्भवात्। भेदकूटपर्यन्तानिवेशेऽपि धूमवान् वह्नेरित्यत्रैवाति-व्याप्तिः, तादृशप्रतियोगितावच्छेदकधूमत्ववत्तत्तद्धूमव्यक्तिभेदवति धूमान्तरे धूमत्वस्य वृत्तित्वात् इत्याशयः। तथा चेति। निरुक्तरीत्या भेदकूटनिवेशे चेत्यर्थः। तादृशेति। धूमवन्निष्ठाभावप्रतियोगिता-वच्छेदकीभूतमित्यर्थः। तार्णतार्णोभयत्वादिकमित्यत्रादिना वह्निनिष्ठया-वत्वादिपरिग्रहः। तद्वतः=तार्णतार्णोभयत्वादिमतः। प्रत्येकभेदकूटवति =तत्तद्वह्निव्यक्तित्वावच्छिन्नभेदकूटवति घटपटादाविति शेषः। वह्नित्व-

तासम्बन्धेन। आधेयता च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसमानाधिकर-णोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वस्वपर्याप्त्यनवच्छेदकीभूतव्यासज्यवृ-त्तिधर्मानवच्छिन्नपर्याप्तिकत्वोभयसम्बन्धावच्छिन्ना ग्राह्या। भेदप्रतियोगितावच्छेदक-त्वञ्च वस्तुतस्तुकल्पानुरोधात् स्वावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नं बोध्यम्।

ननूक्तकल्पे अभाववतः संयोगेन साध्यतायां भावत्वादिहेतावतिव्याप्तिः, साध्याभावप्रतियोगितावच्छेदकताया लाघवात् द्रव्यत्व एव कल्पनीयतया तस्य च स्वरूपसम्बन्धेन साध्यतावच्छेदकीभूताभावाव्यापकत्वादिति चेन्न ? न्यूनवृत्तिधर्मे प्रतियोगितावच्छेदकत्वास्वीकारादिति ध्येयम्।

स्यावृत्तेरतः स्वसमानवृत्तिकत्वं देयमेवेति वदन्ति । तत्तुच्छम् । हेतु-

स्येति । साध्यतावच्छेदकस्येत्यादिः । **स्वसमानवृत्तिकत्वं देयमिति।** तथा च स्वसमानवृत्तिकहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकवती यावती व्यक्तिस्तत्तद्व्यक्तित्वावच्छिन्नभेदकूटवदवृत्ति यत् स्वं तदन्यत्वमेव साध्यतावच्छेदके विवक्षणीयम्, वह्नित्वसमानवृत्तिकहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकाप्रसिद्ध्या स्वपदेन वह्नित्वस्योपादानासम्भवान्न वह्निमान् धूमादित्यादावसम्भवः । तार्णातार्णोभयत्वादेः स्वपदेन धर्त्तुं शक्यत्वेऽपि तत्समानवृत्तिकहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतार्णातार्णोभयत्ववद्यावद्व्यक्तिभेदकूटवदवृत्ति यत् स्वं तार्णातार्णोभयत्वं तदन्यत्वस्य वह्नित्वादौ सत्त्वेन असम्भवः कथमपि नाशङ्कनीय इति भावः।

यद्यपि तदनतिरिक्तवृत्तित्वं तादृशप्रतियोगितावच्छेदकाभाववदवृत्तित्वं तथापि वह्निधूमोभयवान् वह्नेरित्यादौ नातिव्याप्तिः, वह्निमन्निष्ठाभावप्रतियोगितावच्छेदकधूमत्वस्याभाववति वह्निघटादौ वह्निधूमोभयत्वस्यावृत्तित्वेन तस्य पारिभाषिकावच्छेदकत्वात् । न च वह्निधूमोभयत्वावच्छेदेन तादृशधूमत्वाभाववत्येव वह्निधूमोभयस्मिन् तादृशोभयत्वस्य वृत्तित्वात् कुतोऽतिव्याप्तिवारणमिति वाच्यम् ? व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकैकदेशवृत्तिधर्मात्यन्ताभावस्यानभ्युपगमेन तादृशोभयत्वावच्छेदेनोभयस्मिन् धूमत्वाभावसत्त्वे प्रमाणाभावात् । न च तथापि धूमत्वस्य वह्निधूमोभयत्वसमानवृत्तिकत्वाभावात्तस्य तादृशहेतुसमानाधिकरणाऽभावप्रतियोगितावच्छेदकत्वमेव न सम्भवतीति कुतोऽतिव्याप्तिवारणमिति वाच्यम् ? स्वपर्याप्त्यनुयोगितानवच्छेदकव्यासज्यवृत्तिधर्मानवच्छिन्नपर्याप्तिकत्वस्यैव स्वसमानवृत्तिकत्वपदेन विवक्षितत्वात्, तादृशस्वसमानवृत्तिकत्वस्य धूमत्वादावपि सत्त्वादित्युक्ताऽतिव्याप्तिवारणाय यथोक्तभेदकूटनिवेशनं गौरवग्रस्तमतो नैतन्मतं युक्तमित्याह **तत्तुच्छमिति । पर्याप्तिसम्बन्धेनेति ।** साध्यतावच्छेदकताघटकीभूतेनेत्यादिः । **ताद्रूप्येण**=वह्निधूमोभयत्वेन रूपेण ।

साध्यतावच्छेदके **विशेषणीयमिति ।** ननु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकविशिष्टान्यत्वस्यैव नञ्द्वयघटितकल्पे साध्यतावच्छेदके विवक्षणीयत्वम् । वैशिष्ट्यं स्वनिष्ठोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाववदवृत्तित्वसम्बन्धावच्छिन्नस्वनिष्ठाव-

मन्निष्ठाभावप्रतियोगितावच्छेदकं यद्धर्मत्वं तदभाववति पर्याप्तिसम्बन्धेन वन्हिधूमोभयत्वस्यावृत्तित्वादेव ताद्रूप्येण साध्यतायां वह्निहेतावतिव्याप्त्यभावाद् भेदकूटनिवेशव्यर्थतापातादिति ।

केचित्तु तार्णातार्णोभयं नास्तीति प्रतीतौ प्रतियोगिनावच्छेदकता-

---

मतान्तरमप्याह केचित्त्विति । ननु तार्णातार्णोभयाभावप्रतियोगितावच्छेदकताघटकसम्बन्धो यदि समवायो न तु पर्याप्तिस्तदा तार्णमात्रस्याधिकरणे कथं तार्णातार्णोभयं नास्तीति प्रतीतिः समवायेन तादृशोभयत्व-

---

च्छेदकप्रतियोगिताकभेदवत्त्वसम्बन्धेन । तादृशप्रतियोगितावच्छेदकं यद्धर्मंव्यापकमितिकल्पेऽपि हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकवृत्तिभिन्नत्वमेव साध्यतावच्छेदके निवेशनीयम्, वृत्तित्वं व्यापकतासम्बन्धेन । एवञ्च नञ्द्वयघटितकल्पस्यैव कृटत्वाघटिततया लाघवसम्भवे इदन्तुचिन्त्यते इत्यादिकल्पे निरुक्तनञ्द्वयघटितकल्पे गौरवाभिधानमसङ्गतमिति चेन्न ? वह्निमान् प्रमेयधूमादित्यादौ तादृशावच्छेदकविशिष्टभेदाऽप्रसिद्ध्याऽव्याप्तिवारणाय तादृशाऽभावप्रतियोगितावच्छेदकविशिष्टत्वसमानाधिकरणोभयाऽवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वस्य वक्तव्यत्वात्, एवं व्यापकतासम्बन्धेन हेतुमन्निष्ठाऽभावप्रतियोगितावच्छेदकवृत्तित्वसमानाधिकरणोभयाऽवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वस्याऽप्यवश्यं साध्यतावच्छेदके विवक्षणीयतया नञ्द्वयाऽघटितकल्पस्यैव लघुत्वादिति वदन्ति ।

अथ नञ्द्वयाऽघटितकल्पे वह्निमान् धूमादित्यत्राव्याप्तिः हेतुसमानाधिकरणाऽभावप्रतियोगितावच्छेदकतार्णातार्णोभयत्वाद्यभाववति घटादौ वह्नित्वस्याऽवृत्तित्वात् । न च स्वसमानवृत्तिकत्वेन हेतुमन्निष्ठाऽभावप्रतियोगितावच्छेदकं विशेषणीयम्, स्वं साध्यतावच्छेदकं तार्णातार्णोभयत्वन्तु न वह्नित्वसमानवृत्तिकमिति वह्नित्वसमानवृत्तिकहेतुसमानाधिकरणाऽभावप्रतियोगितावच्छेदकं यत् तत्तद्द्वयान्यतरत्वं तदभाववति वह्नित्वस्य वर्त्तमानत्वादेव नाव्याप्तिरिति वाच्यम् ? तथा सति तद्रूपवान् तद्रसादित्यत्राव्याप्त्यापत्तेः, तद्रूपत्वसमानवृत्तिकहेतुमन्निष्ठाऽभावप्रतियोगितावच्छेदकस्याऽप्रसिद्धेरिति चेन्न ? स्वपर्याप्त्यनुयोगितानवच्छेदकव्यासज्यवृत्तिधर्मानवच्छिन्नपर्याप्तिकत्वेन हेतुमन्निष्ठाऽभावप्रतियोगितावच्छेदकस्य विवक्षितत्वात् तादृशघटत्वादिरूपावच्छेदकमादायैव तद्रूपवान् तद्रसादित्यादौ लक्षणसमन्वयसम्भवादिति ध्येयम् ।

केचित्तु तार्णातार्णोभयत्वाभाववति प्रत्येकवह्नौ वह्नित्वस्य वृत्तेः वह्निमान् धूमादित्यत्राऽव्याप्तिवारणसम्भवे स्वसमानवृत्तिकत्वं नोपादेयमेव । वह्निधूमोभयवान्

निर्वाहकः समवाय एव सम्बन्धो भासते न तु पर्याप्तिः । दण्डिपुरुषत्वाश्रयस्य सत्त्वेऽपि तदवच्छिन्नाभाववत्तादृशोभयत्वाश्रयस्य तार्णमात्रस्य सत्त्वेऽपि तादृशोभयत्वावच्छिन्नाभावो न विरुद्धः, तदवच्छिन्नाधिकरणतया सार्धमेव

---

विशिष्टाधिकरणतया समं तादृशोभयत्वविशिष्टाभावस्य विरोधादित्यत आह—दण्डिपुरुषत्वेति । दण्डोपलक्षितपुरुषत्वाश्रयस्येत्यर्थः । तदवच्छिन्नाऽभाववत् = दण्डपुरुषत्वोभयधर्मावच्छिन्नप्रतियोगिताकाऽभाववत् । तादृशोभयत्वाश्रयस्य = तार्णातार्णोभयत्वाश्रयस्य । तादृशेति । तार्णातार्णोभयत्वावच्छिन्नप्रतियोगिताकाभाव इत्यर्थः । न विरुद्धः = न तादृशोभयत्वाश्रयतार्णमात्राधिकरणत्वाऽसमानाधिकरणः । कुत इत्याकाङ्क्षायामाह तदवच्छिन्नेति । प्रतियोगितावच्छेदकीभूततादृशोभयत्वावच्छिन्नाधिकरणतया सहैवेत्यर्थः । एवकारात्, तदाश्रयाधिकरणतया

---

वह्नेरित्यादौ साध्याभावप्रतियोगितावच्छेदकीभूतधूमत्वाभाववति वह्नौ साध्यतावच्छेदकीभूतोभयत्वस्यावृत्तित्वादेवातिव्याप्तिविरहादित्याहुः ।

ननु तथापि द्रव्यत्वपृथिवीत्वोभयवान् द्रव्यत्वादित्यादावतिव्याप्तिः, द्रव्यत्वसमानाधिकरणसाध्याभावप्रतियोगितावच्छेदकत्वस्य लाघवेन पृथिवीतराऽवृत्तित्वे कल्पनीयतया तस्य साध्यतावच्छेदकसमानवृत्तिकत्वाभावादिति चेन्न ? प्रतियोगितान्यूनवृत्तिधर्मे प्रतियोगितावच्छेदकताया अनभ्युपगमात् स्वपर्याप्त्यनवच्छेदकव्यासज्यवृत्तिधर्मानवच्छिन्नपर्याप्तिकत्वस्य, स्वसमानवृत्तिकत्वपदेन विवक्षितत्वाद्वाऽतिव्याप्त्यसम्भवात् । न च यथाश्रुतलक्षणे साध्यतावच्छेदकातिरिक्तव्यासज्यवृत्तिधर्मानवच्छिन्नत्वस्य हेतुसमानाधिकरणाऽभावीयप्रतियोगितायां निवेशेनैवोपपत्तौ स्वसमानवृत्तिकत्वोपादानमनर्थकमिति वाच्यम् ? तथासति गौरवात्, प्रमेयस्य विषयितया साध्यत्वे घटत्वपटत्वोभयत्वपुरस्कारेण तदनवगाहिज्ञानत्वहेतावव्याप्तेश्च उभयाभावस्य घर्त्तुमशक्यत्वात् तदन्याऽभावस्य च प्रतियोगिवैयधिकरण्यविरहेण घर्त्तुमशक्यत्वादिति ध्येयम्।

ननु समवायेन तार्णातार्णोभयत्ववतः संयोगेन साध्यतायां तादृशवह्नेः हेतुत्वे अव्याप्तिः, पर्याप्तिसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकस्य तादृशोभयाभावस्य प्रतियोगितावच्छेदकं यत् तार्णातार्णोभयत्वं तस्य साध्यतावच्छेदकसमानवृत्तिकतया तदभाववदवृत्तित्वस्य साध्यतावच्छेदके सत्त्वात् । न च साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकत्वाभावान्नोक्ताऽभावो लक्षणघटक इति वाच्यम् ?

तस्य विरोधात् । एवं च यथाश्रुतमेव सम्यगित्याहुः । तच्चिन्त्यम् ।

वस्तुतस्तु समवायेन प्रमेयसाध्यके भावत्वादिहेतावतिव्याप्तिवारणार्थं-

---

सहाऽभावस्य विरोधव्यवच्छेदः। तस्य = तादृशोभयत्वावच्छिन्नाभावस्य। विरोधात् = तदवच्छिन्नाधिकरणत्वाऽसामानाधिकरण्यात् । यथा दण्डोपलक्षितकेवलपुरुषवति भूतले दण्डपुरुषत्वधर्मद्वयावच्छिन्नप्रतियोगिताकाभावो वर्त्तत एव, दण्डपुरुषत्वद्वयावच्छिन्नाधिकरणता यत्र वर्त्तते तत्रैव तादृशप्रतियोगिताकाभावो न वर्त्तते इति नियमः। तथा तार्णतार्णोभयत्वाश्रयकेवलतार्णवत्यपि तार्णतार्णोभयाभावो वर्त्तत एव, तादृशोभयत्वावच्छिन्नाधिकरणताया अप्रसिद्धतया तार्णतार्णोभयाभावविरोधित्वस्याकल्पनात् । तादृशोभयाभावस्य सर्वत्र विद्यमानत्वात् तार्णमात्रवत्यपि तादृशोभयं नास्तीति प्रतीतिः सम्भवत्येवेति तात्पर्यम्। **एवञ्चेति** । तार्णतार्णोभयाभावप्रतियोगितावच्छेदकताघटकसम्बन्धस्य समवायत्वे चेत्यर्थः। **यथाश्रुतमिति** । हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदके स्वसमानवृत्तिकत्वमवश्यमेव देयं अन्यथा हेतुसमानाधिकरणतार्णतार्णोभयाभावप्रतियोगितावच्छेदकस्य समवायेन प्रत्येकं वर्त्तमानतया तादृशोभयत्वाभाववति घटादौ वह्नित्वस्याऽवृत्तित्वात् वह्निमान् धूमादित्यादावसम्भवः स्यादिति भावः । **तच्चिन्त्यमिति** । समवायेन तादृशोभयत्वाश्रयाधिकरणे तादृशोभयत्वावच्छिन्नाऽनधिकरणत्वं न सम्भवतीति चिन्ताबीजमिति केचित् ।

स्वमतेन स्वसमानवृत्तिकत्वविशेषणोपादानप्रयोजनमाह **वस्तुत इति** । प्रमेयवान् भावत्वादित्यादौ हेतुसमानाधिकरणाभावपदेन समवायावच्छिन्नप्रमेयसामान्याभावो धर्तुं न शक्यते तत्प्रतियोगितावच्छेदकस्य प्रमेयत्वस्याऽभावाऽप्रसिद्धेरित्यभावान्तरमादायातिव्याप्तिः स्यात् । अत्रोक्तातिव्याप्तिवारणार्थं हेतुसमानाधिकरणाऽभावप्रतियोगिता-

---

प्रतियोगितावच्छेदकताघटकसम्बन्धेन प्रतियोगितावच्छेदकाऽभावविवक्षणे हेतुसमानाधिकरणाऽभावप्रतियोगितायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकत्वनिवेशस्य निष्प्रयोजनत्वादिति चेन्न ? सत्तावान् जातेरित्यादिभिस्तुल्यत्वादिति केचित् ।

मवश्यं प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वमित्यस्य हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यदन्यूनवृत्ति तत्त्वमर्थो वाच्यः । तत्रान्यूनवृत्तित्वं न प्रतियोगितावच्छेदकताघटकसम्बन्धेन वाच्यम् । वह्निधूमोभयवान्वह्ने-

---

वच्छेदकं यद्धर्मव्यापकं सधर्मः पारिभाषिकावच्छेदकः इत्येवं तादृशप्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वमित्यनेन विवक्षणीयमित्याहातिव्याप्तेरित्यादि । यदन्यूनवृत्ति=यद्व्यापकम् । तत्र च=निरुक्तलक्षणार्थे च । घटकत्वं सप्तम्यर्थस्तस्य न्यूनवृत्तित्वमित्यनेनान्वयः । ग्राह्यमिति । तथा च हेतुसमानाधिकरणाऽभावप्रतियोगितावच्छेदकं यद्धर्मवन्निष्ठाऽभावीयतादृशप्रतियोगितावच्छेदकताघटकसम्बन्धावच्छिन्नप्रतियोगित्वाऽभाववत् स धर्मः पारिभाषिकावच्छेदक इत्यर्थो न वक्तव्यः इत्याशयः । प्रतियोगितावच्छेदकताघटकसम्बन्धेन यद्धर्मव्यापकत्वाभिधाने दोषमाह वह्नीति । हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं यद्धर्मवन्निष्ठाभावीयप्रतियोगितावच्छेदकताघटकसम्बन्धावच्छिन्नप्रतियोगित्वशून्यं सधर्मपारिभाषिकावच्छेदक इत्युक्तौ समवायेन प्रमेयसाध्यकभावत्वादिहेतौ हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकस्य प्रमेयत्वस्य प्रमेयत्ववन्निष्ठाभावीयप्रतियोगितावच्छेदकताघटकीभूतस्वरूपसम्बन्धावच्छिन्नप्रतियोगित्वशून्यतया प्रमेयत्वस्यैव पारिभाषिकावच्छेदकत्वसम्भवात् अतिव्याप्तिवारणेऽपि वह्निधूमोभयवान् वह्नेरित्यत्राऽतिव्याप्तिः, वह्निमति वर्तमानस्य वह्निधूमोभयाभावस्य प्रतियोगितावच्छेदकं यद्वह्निधूमोभयत्वं तस्य पर्याप्तिसम्बन्धेन वह्निधूमोभयत्ववत् प्रत्येकवह्न्यादिनिष्ठो यः प्रति-

---

स्वपर्याप्त्यवच्छेदकीभूतेति । अथ वह्निमान् धूमादित्यत्राऽव्याप्तिः वह्नित्वपर्याप्त्यवच्छेदकीभूतं यद् धूमजनकतेजस्त्वं तदवच्छिन्ने हेतुमन्निष्ठाऽभावप्रतियोगितावच्छेदकवह्निनिष्ठयावत्त्वादेरपि पर्याप्तत्वात् धूमजनकतेजो यावान् वह्निश्चेत्यनुभवादिति चेन्न ! स्वपर्याप्त्येत्यादिना स्वपर्याप्त्यनवच्छेदकव्यासज्यवृत्तिधर्मावच्छिन्नपर्याप्तिकान्यत्वस्य विवक्षितत्वात् वह्निनिष्ठयावत्त्वादेः वह्नित्वपर्याप्त्यनवच्छेदकयावत्त्वावच्छिन्नपर्याप्तिकत्वात्, अव्याप्तिवारणसम्भवात् । यद्यपि सर्वे घटा रूपवन्त इति प्रत्ययात् रूपादिपर्याप्त्यवच्छेदकत्वं घटादिनिष्ठयावत्त्वमपीति वह्निमान् धूमादित्यादावव्याप्तिः, वह्नित्वादिपर्याप्तेरपि वह्निनिष्ठयावत्त्वावच्छिन्नत्वेन वह्नित्वसमानवृत्तिकत्वस्य वह्निनिष्ठयावत्त्वेऽक्षतत्वात् । तथापि स्वसमानवृत्तिकत्वपदेन स्वप्रति-

योगितावच्छेदकताघटकीभूतपर्याप्तिसम्बन्धेन वह्निधूमोभयत्वाभावस्तन्निरूपिततादृशपर्याप्तिसम्बन्धावच्छिन्नप्रतियोगितावत्त्वेन वह्निधूमोभयत्वस्य यद्धर्मपदेनोपादातुमशक्यतया साध्याभावस्य लक्षणाऽघटकत्वादतः हेतुसमानाधिकरणाऽभावीयप्रतियोगितावच्छेदकं यद्धर्मवन्निष्ठाऽभावीयस्वावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नप्रतियोगिताशून्यं स धर्मः पारिभाषिकावच्छेदक इत्यस्यैव विवक्षणीयतया नोक्तस्थलेऽतिव्याप्तिः, तादृशप्रतियोगितावच्छेदकवह्निधूमोभयत्वस्य पर्याप्तिसम्बन्धेन वह्निधूमोभयत्ववत्प्रत्येकवह्न्यादौ स्वावच्छिन्नप्रतियोगित्वसम्बन्धेन वर्त्तमानतया तत्र वर्त्तमानस्य घटत्वाद्यभावस्य स्वावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नप्रतियोगिताशून्यत्वस्य वह्निधूमोभयत्वे सत्त्वेन यद्धर्मपदेन वह्निधूमोभयत्वस्यैव धर्त्तुं शक्यतया तस्यैव पारिभाषिकावच्छेदकत्वात्। यद्यपि स्वावच्छिन्नप्रतियोगित्वसम्बन्धस्य वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नप्रतियोगिताकाऽभावाप्रसिद्ध्या तेन सम्बन्धेन व्यापकत्वाभिधानमनुचितं तथापि हेतुसमानाधिकरणाऽभावप्रतियोगितावच्छेदकं यद्धर्मवन्निष्ठाऽन्योऽन्याभावीयप्रतियोगितानिरूपितस्वावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नावच्छेदकताशून्यं तस्यैव पारिभाषिकावच्छेदकत्वविवक्षया न दोषः। नचैवमसम्भवः, स्वपदस्य हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकपरतया तादृशस्वावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नावच्छेदकताकाऽन्योऽन्याभावाप्रसिद्धेरिति वाच्यं? स्वावच्छिन्नप्रतियोगित्वसंसर्गातिरिक्तसम्बन्धावच्छिन्नत्व-हेतुमन्निष्ठाऽभावप्रतियोगितावच्छेदकनिष्ठत्वोभयाभाववदवच्छेदकताया एव तादृशाऽवच्छेदकतापदेन विवक्षितत्वादिति ध्येयम्।

एवञ्च वह्निमान् धूमादित्यादौ तार्णाऽतार्णोभयं नास्तीति प्रतीतिसिद्धस्य धूमादिमन्निष्ठाभावस्य प्रतियोगितावच्छेदकं यत्तार्णातार्णोभयत्वं तस्य स्वावच्छिन्नप्रतियोगित्वसम्बन्धेन वह्नित्वव्यापकतया वह्नित्वस्याऽपि यद्धर्मपदेनोपादानसम्भवात् असम्भवः स्यादतः स्वसमानवृत्तिकत्वेन हेतुसमा-

---

योगिकपर्याप्तिवृत्ति-उभयावृत्तिधर्मावच्छिन्ननिरूप्यताकानुयोगितावच्छेदकधर्मावच्छिन्नपर्याप्तिकत्वस्य विवक्षितत्वान्नाऽव्याप्तिः, वह्नौ वह्नित्वपर्याप्तेर्नानात्वात् तत्तत्पर्याप्तिव्यक्तित्वावच्छिन्ननिरूप्यताकाऽनुयोगितावच्छेदकत्वस्य वह्निनिष्ठयावत्त्वे विरहात् तत्तदेकत्वस्यैव तादृशानुयोगितावच्छेदकत्वादिति ध्येयम्।

रित्यादावतिव्याप्तेः, हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्वह्निधूमोभयत्वं तस्य तादृशपर्याप्त्यधिकरणं यद्वह्निधूमोभयं तत्प्रत्येकनिष्ठस्य पर्य्याप्ति-सम्बन्धावच्छिन्नाभावस्य प्रतियोगित्वसत्त्वेन वह्निधूमोभयत्वादिकं प्रति न्यूनवृत्तित्वात्, किन्तु स्वावच्छिन्नप्रतियोगितासम्बन्धेनैव तथात्वं वाच्यम्, तथा च वह्निनिष्ठयावत्त्वतार्णीतार्णोभयत्वादेरपि स्वावच्छिन्न-प्रतियोगित्वसम्बन्धेन वह्नित्वादिकं प्रत्यन्यूनवृत्तित्वात् वह्निमान् धूमा-दित्यादौ वह्नित्वादेरवच्छेदकत्ववारणाय स्वसमानवृत्तिकत्वेनावच्छेदकं विशेषणीयमिति युक्तमुत्पश्यामः ।

ननु प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वमित्यत्र घटकं प्रतियोगि-तावच्छेदकत्वं यदि प्रतियोगितानतिरिक्तवृत्तित्वरूपं तदा तार्णीतार्णो-

---

नाधिकरणाभावप्रतियोगितावच्छेदकं विशेषणीयम्, तार्णीतार्णोभयत्वन्तु न वह्नित्वसमानवृत्तिकमिति तस्य वह्नित्वव्यापकत्वेऽपि न क्षतिरित्याह **हेतुमन्निष्ठेति** । **युक्तमुत्पश्याम इति** । वयमिति शेषः ।

हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकाभाववदवृत्तित्वमित्यत्र तादृशावच्छेदकत्वं यदि तादृशप्रतियोगितावच्छेदकाभाववदवृत्तित्वरूपं तदाऽत्माश्रयः स्यादत आह **प्रतियोगितेति** । हेतुमन्निष्ठाभावीयप्रतियो-गितात्वावच्छिन्नाभाववदवृत्तित्वरूपमित्यर्थः । **पारिभाषिकावच्छेदकं स्यादिति** । तथा च वह्निमान् धूमादित्यादौ सर्वत्राऽसम्भवः धूमवन्निष्ठ-तार्णीतार्णोभयाभावीयप्रतियोगित्वाभाववदवृत्ति यद्वह्नित्वादिकं तस्य वह्नि-

---

भट्टाचार्यास्तु धर्मविशिष्टधर्मः पारिभाषिकावच्छेदकः, वैशिष्ट्यं स्वतादात्म्य-स्वविशिष्टहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकाऽभाववदवृत्तित्वोभयसम्बन्धेन । स्ववै-शिष्ट्यं तादृशप्रतियोगितावच्छेदके स्वप्रतियोगिकपर्याप्त्यवच्छेदकीभूतैकत्वावच्छि-न्नाऽनुयोगिताकपर्याप्तिप्रतियोगित्व - एकत्वाऽवृत्तित्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छे दकधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्व-एकत्वाऽवृत्तिस्वसमानाधिकरणैकत्वाव-च्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वैतदन्यतमसम्बन्धेन । वृत्तित्वं स्वप्रतियोगिकपर्या-प्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । अन्यतमघटकतृतीयसम्बन्धनिवेशान्न वह्निधूमो-भयवान् वह्नेरित्यत्रातिव्याप्तिरित्याहुः ।

**एवं च यद्धर्मावच्छिन्नेत्यत्र यद्धर्मान्यूनवृत्तिधर्मावच्छिन्नेति वक्तव्यम् । तेनोक्ताव्याप्तिनिरासः ।**

भयत्वावच्छिन्नाभावमादाय वह्निमान् धूमादित्यादौ वह्नित्वमपि पारिभाषिकावच्छेदकं स्यादत आह **घटकमिति** । प्रतियोगिताधर्मिकोभयाभावघटितलक्षणे गुरुरूपेण साध्यतायामव्याप्तिमपाकर्तुमाह **एवं चेति** । स्वसमानवृत्तिकत्वविवक्षणे चेत्यर्थः । अन्यथा वह्नित्वान्यूनवृत्तितार्णातार्णोभयत्वावच्छिन्नत्वस्य तादृशप्रतियोगितायां सत्त्वादसम्भव एव स्यादिति भावः ।

त्वादिसमानवृत्तिकयथोक्तहेतुमन्निष्ठाभावीयप्रतियोगितावच्छेदकतया तादृशवह्नित्वादिरूपप्रतियोगितावच्छेदकाभाववद्वृत्ति यत् स्वं वह्नित्वादिकं तदन्यत्वस्य साध्यतावच्छेदके वह्नित्वादौ विरहात् साध्यतावच्छेदकस्यैव पारिभाषिकावच्छेकत्वादिति भावः । निरुक्तलक्षणघटकीभूतं प्रतियोगितावच्छेदकत्व यदि स्वरूपसम्बन्धरूपं तदानाऽसम्भवः, स्वरूपसम्बन्धरूपतादृशप्रतियोगितावच्छेदकतार्णातार्णोभयत्वाभाववद्वृत्ति यत् स्वं तार्णातार्णोभयत्व तदन्यत्वस्य वह्नित्वादौ सत्त्वादित्यभिप्रायेणाऽऽह-**घटकमितीति** ।

प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नानधिकरणहेत्वधिकरणनिष्ठाऽभावीयप्रतियोगितासामान्ये यद्धर्मावच्छिन्नत्व-यत्सम्बन्धावच्छिन्नत्वोभयाभावस्तेन सम्बन्धेन तद्धर्मावच्छिन्ने हेतुव्यापकस्तद्व्यापकसामानाधिकरण्यं हेतौ व्याप्तिरिति लक्षणे प्रमेयवह्निमान् धूमादित्यादावव्याप्तिः प्रमेयवह्नित्वावच्छिन्नत्वस्य कुत्राऽपि प्रतियोगितायामप्रसिद्धतया हेतुमन्निष्ठघटाभावप्रतियोगितायां तदभावस्य वक्तुमशक्यत्वादित्येवं एवञ्चेति दीधितिग्रन्थमवतारयति **प्रतियोगितेति** । अन्यथा=एवञ्चेत्यस्य स्वसमानवृत्तिकत्वविवक्षणे चेत्यर्थाऽविवक्षणे । वह्निव्यान्यूनवृत्ति=वह्नि-

त्रित्वादीति । ननु व्यासज्यवृत्तित्व यदि एकत्वानवच्छिन्नपर्याप्तिकत्वं तदा वह्निधूमोभयवान् धूमादित्यादौ वह्निधूमघटवृत्तित्रित्वावच्छिन्नाभावमादाय नाव्याप्तिः, वह्निधूमोभयत्वनिष्ठं यदेकत्वानवच्छिन्नपर्याप्तिकत्वं तस्य तादृशत्रित्वेऽसत्त्वेन तादृशत्रित्वे साध्यतावच्छेदकसमानवृत्तिकत्वविरहादिति चेन्न ? अभावानां अधिकरणभेदेन भिन्नत्वाभ्युपगमे धूमत्वप्रकारकप्रमाविशेष्यवान् वह्नेरित्यत्राऽति-

ननु धूमत्वमेकस्मिन्नेव धूमे पर्याप्तमित्यादिप्रतीतेः प्रत्येकवृत्तिधर्मावच्छिन्नाधिकरणताकत्वावगाहितयैवोपपत्तौ धूमत्वादेः पर्याप्तिसम्बन्धे मानाभाव इति धूमवान्वह्नेरित्यादावतिव्याप्तिः, स्वपदेन धूमत्वस्य ग्रहीत्वव्यापकीभूतम् । ताणीताणविति । तादृशप्रतियोगितासामान्ये यद्धर्मव्यापकधर्मावच्छिन्नत्व-यत्सम्बन्धावच्छिन्नत्वोभयाभावविवक्षणे प्रमेयवह्निमान् धूमादित्यादौ धूमवन्निष्ठाऽभावीयघटनिष्ठप्रतियोगितायां प्रमेयवह्नित्वव्यापकवह्नित्वावच्छिन्नत्वसंयोगावच्छिन्नत्वयोर्द्वयोरभावसत्त्वेनाव्याप्तिवारणेऽपि वह्निमान् धूमादित्यादावसम्भवः, धूमवन्निष्ठताणीताणोंभयाभावप्रतियोगितायां वह्नित्वव्यापकताणीताणोंभयत्वावच्छिन्नत्वसंयोगसम्बन्धावच्छिन्नत्वयोः द्वयोः सत्त्वादतस्तादृशप्रतियोगितासामान्ये स्वसमानवृत्तिकयद्धर्मव्यापकधर्मावच्छिन्नत्व-यत्सम्बन्धावच्छिन्नत्वोभयाभाव एव विवक्षणीयस्तथा च नाऽसम्भवः, ताणीताणोंभयत्वादेः वह्निव्यापकत्वेऽपि वह्नित्वसमानवृत्तिकत्वाऽभावादितिसमुदितग्रन्थतात्पर्यम् ।

दीधितौ वस्तुतस्तुकल्पानुसारणं समर्थयति नन्विति । धूमत्वमेकस्मिन्नेव पर्याप्तमिति प्रतीतिरेव धूमत्वस्य पर्याप्तिसम्बन्धसत्त्वे मानमिति पूर्वोक्तं निराकरोति प्रत्येकेति । प्रत्येकधूमादिनिष्ठं यत् तत्तद्व्यक्तित्वं तदवच्छिन्ना या धूमत्वाधिकरणता तत्कत्वावगहितयैवोपपत्तावित्यर्थः । ननु धूमत्वादेः पर्याप्तिसम्बन्धाऽसत्त्वे को दोष इत्यत आह धूमवानिति । ग्रहीतुमशक्यत्वादिति । तथा च स्वपदेन घटपटोभयत्वादिकमादाय तत्समानवृत्तिकवह्निमन्निष्ठाभावप्रतियोगितावच्छेदकं यत् तादृशोभयत्वं तदभाववदवृत्ति यत् स्वं घटपटोभयत्वं तदन्यत्वस्य साध्यतावच्छेदके धूमत्वे सत्त्वात् धूमवान् वह्नेरित्यादावुक्तलक्षणस्यातिव्याप्तिरिति भावः ।

---

व्याप्तथापत्तेः । वह्निमन्निष्ठसाध्याऽभावप्रतियोगितावच्छेदके धूमत्वे साध्यतावच्छेदकसमानवृत्तिकत्वविरहेण साध्याभावस्य लक्षणाऽघटकत्वादिति वदन्ति ।

अन्ये तु व्यासज्यवृत्तित्वं यद्येकत्वानवच्छिन्नपर्याप्तिकत्वं तदा महानसीयवह्न्यभावप्रतियोगितावच्छेदकतावान् वह्नेरित्यत्राऽतिव्याप्तिः, साध्याभावप्रतियोगितावच्छेदकताया लाघवेन महानसीयत्ववह्नित्वोभयत्वे कल्पनीयतया साध्यतावच्छेदकसमानवृत्तिकत्वस्य तत्र विरहादतो व्यासज्यवृत्तित्वं एकत्वावच्छिन्नपर्याप्तिकान्यत्वमिति वह्निधूमोभयवान् धूमादित्यत्राऽव्याप्तिसंगतिरित्याहुः ।

वस्तुतस्तु तदवच्छिन्नप्रतियोगिताकाभाववदसम्बद्धस्वविशि-

तुमशक्यत्वात् । एवं सत्तात्वस्य विशिष्टसत्तात्वानतिरिक्तवृत्तितया सत्त्वादिसाध्यकजातिमत्त्वादिहेतावव्याप्तिश्चेत्यत आह—वस्तुतस्त्विति । तदवच्छिन्नेति । हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूततत्तद्धर्मावच्छिन्नाभाववत्यसम्बद्धं यद्धर्मविशिष्टं सामान्यं तदेव पारिभाषिकावच्छेदकमित्यर्थः ।

ननु धूमत्वमेकस्मिन्नेव पर्याप्तमित्याकारकप्रतीतिविषयतायाः पर्याप्तिसम्बन्धेऽपि विनिगमनाविरहेण स्वीकर्तुं शक्यतया कथं धूमवान् वह्नेरित्यादावतिव्याप्तिः, स्वपदेन धूमत्वस्यापि धर्तुं शक्यत्वादित्यत आहैवमिति । स्वसमानवृत्तिकहेतुमन्निष्ठाऽभावप्रतियोगितावच्छेदकाऽभाववदवृत्ति यत् स्वं तदेव पारिभाषिकावच्छेदकमिति लक्षणे सत्तावान् जातेरित्यत्राव्याप्तिः, सत्तात्वसमानवृत्तिकं यत् जातिमन्निष्ठाभावप्रतियोगितावच्छेदकगुणकर्मान्यत्वविशिष्टसत्तात्वं तदभाववदवृत्तित्वस्य सत्तात्वे वर्त्तमानत्वात् साध्यतावच्छेदकस्यैव पारिभाषिकावच्छेदकत्वसम्भवादतो वस्तुतस्तुकल्पानुसरणं दीधितिकृता कृतमित्याह सत्तात्वस्येति । साध्यतावच्छेदकीभूतस्येत्यादिः । न च सत्तात्वस्य विशिष्टसत्तात्वपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नपर्याप्तिकत्वविरहेण तस्य स्वपदेन धर्तुमशक्यत्वात् कथमव्याप्तिरिति वाच्यं ? स्वपर्याप्त्यनुयोगितानवच्छेदकव्यासज्यवृत्तिधर्मानवच्छिन्नपर्याप्तिकत्वस्यैव स्वसमानवृत्तिकत्वरूपत्वादित्युक्तत्वादिति दिक् ।

व्याप्यवृत्तिसाध्यकस्थलीयलक्षणार्थमाह हेतुमन्निष्ठेति । अव्याप्यवृत्तिसाध्यकस्थले तु प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकीभूततत्तद्धर्मावच्छिन्नाऽभाववति असम्बद्धं यद्धर्मविशिष्टसामान्यं तदेव पारिभाषिकावच्छेदकं तदन्यसाध्यतावच्छेदका-

भेदकूटनिवेशव्यर्थतापातादिति । न च सम्प्रदायविदां मते उभयत्वं व्याप्यवृत्ति, परेषां मते तु उभयत्वमव्याप्यवृत्ति, तथा च वह्निधूमोभयवान् वह्नेरित्यत्र कथं धूमाभावमादायातिव्याप्तिवारणं धूमत्वाभाववति वह्निधूमोभयत्वस्य वृत्तित्वादिति वाच्यम् ? प्रतियोगितावच्छेदकाऽभावाधिकरणत्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावदवृत्तित्वाभावस्य विवक्षितत्वादिति ध्येयम् ।

ष्टसामान्यकत्वम्, स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकतत्कत्वम् वा तदनतिरिक्तवृत्तित्वं वक्तव्यम् ।

अत्र तदाश्रयप्रतियोगिताकाभावेत्युक्तौ तादृशधूमत्वाश्रयप्रति-

वच्छिन्नसमानाधिकरण्यं हेतौ व्याप्तिरित्येवं वक्तव्यम्, वह्निमान् धूमादित्यादौ धूमवन्निष्ठतादृशघटाद्यभावप्रतियोगितावच्छेदकघटत्वाद्यवच्छिन्नाभाववति पर्वतादौ वह्नित्वविशिष्टस्य सम्बद्धत्वात् वह्नित्वं न पारिभाषिकावच्छेदकमपि तु तत्र घटत्वाद्यवच्छिन्नस्याऽसम्बद्धत्वात् घटत्वादिकमेव पारिभाषिकावच्छेदकमिति तदन्यत्वस्य वह्नित्वे सत्त्वात् लक्षणसमन्वयः । धूमवान् वह्नेरित्यादौ वह्निमति वर्तमानस्य तादृशधूमाभावस्य प्रतियोगितावच्छेदकीभूतधूमत्वावच्छिन्नाभाववति तप्तायःपिण्डे धूमत्वविशिष्टस्याऽसम्बद्धत्वात् धूमत्वस्यैव पारिभाषिकावच्छेदकत्वान्नातिव्याप्तिः । हेतुसमानाधिकरणाभावे प्रतियोगिवैयधिकरण्यविवक्षणान्न कपिसंयोगी एतद्वृक्षत्वादित्यत्राऽव्याप्तिः, अन्यथा हेतु समानाधिकरणकपिसंयोगाभावप्रतियोगितावच्छेदककपिसंयोगत्वावच्छिन्नाभाववति गुणादौ कपिसंयोगत्वविशिष्टस्याऽसम्बद्धत्वात् कपिसंयोगत्वस्यैव पारिभाषिकावच्छेदकत्वेनाऽव्याप्तिः स्यादित्यवधेयम् ।

अथ यत्किञ्चिद्धेत्वधिकरणे साध्यतावच्छेदकसम्बन्धेन असम्बद्धं यद्धर्मविशिष्टसामान्यं तदन्यसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यमेव हेतौ व्याप्तिरस्तु तावतैव गुरुरूपेण साध्यतायां व्यभिचारिण्यतिव्याप्तिवारणसम्भवे पारिभाषिकावच्छेदकत्वानुसरणं व्यर्थं स्यादिति चेन्न? संयोगी गुणकर्मान्यत्वादित्यादावतिव्याप्त्यापत्तेः, सामान्यादौ समवायेन सम्बद्धत्वस्याऽप्रसिद्ध्या यत्किञ्चिद्धेत्वधिकरणपदेन तस्य धर्तुमशक्यत्वात्, द्रव्यस्य तथात्वेन धर्त्तुं शक्यत्वेऽपि तत्र संयोगत्वविशिष्टस्य समवायेन सम्बद्धत्वात् तदसम्बद्धघटत्वादिविशिष्टसामान्यकघटत्वादिभिन्नत्वस्य साध्यतावच्छेदके संयोगत्वे सत्त्वात् । न च स्वविशिष्टसामान्यानधिकरणयत्किञ्चिद्धेत्वधिकरणकान्यत्वमेव साध्यतावच्छेदके विवक्षणीयमिति न तत्राऽतिव्याप्तिः, संयोगत्वविशिष्टानधिकरणत्वस्य सामान्यादौ सत्त्वादिति वाच्यम्? घटवान् महाकालत्वादित्यत्राव्याप्त्यापत्तेः गगनत्वविशिष्टस्याऽधिकरणाऽप्रसिद्धेः स्वपदेन कस्याप्युपादानासम्भवात् । न च

योगिकोभयाभावादिमति प्रमेयधूमत्वविशिष्टस्य सम्बद्धतयाऽवच्छेदकत्वं न स्यात् किं तु गगनत्वादेरेव तथात्वं स्यादत उक्तम्—तदवच्छिन्नेति।

---

हेत्वधिकरणताव्यापकं यद्धर्मविशिष्टस्याधिकरणत्वं तदन्यत्वमेव पारिभाषिकावच्छेदकत्वं स्यादिति घटवान् महाकालत्वादित्यादौ गगनत्वादेरेव तादृशावच्छेदकत्वसम्भवान्नाऽव्याप्तिरिति वाच्यम् ? तथा सति गौरवात्, तादृशप्रतियोगितावच्छेदकाघटितस्य पारिभाषिकाऽवच्छेदकत्वाऽकल्पनाच्च। निरुक्तस्य लक्षणाऽन्तरत्वाच्चेति ध्येयम्। हेतुमन्निष्ठाऽभावप्रतियोगितावच्छेदकीभूतधर्माश्रयप्रतियोगिकाऽभाववदसम्बद्धत्वविवक्षणे धूमवान् वह्नेरित्यादावतिव्याप्तिः, तादृशप्रतियोगितावच्छेदकधूमत्वाश्रयप्रतियोगिकस्य धूमघटोभयाभावस्याऽधिकरणे पर्वतादौ धूमत्वविशिष्टस्य सम्बद्धतया तादृशपर्वताद्यसम्बद्धगगनत्वादिविशिष्टसामान्यकगगनत्वादिभिन्नत्वस्य साध्यतावच्छेदके धूमत्वे सत्त्वादित्याहाऽत्रेति। निरुक्तलक्षणे इत्यर्थः। तदाश्रयेति। हेतुमन्निष्ठाऽभावप्रतियोगितावच्छेदकीभूततत्तद्धर्माश्रयप्रतियोगिकाभाव इत्युक्तावित्यर्थः। तादृशेति। हेतुसमानाधिकरणाऽभावप्रतियोगितावच्छेदकीभूतधूमत्वाश्रयप्रतियोगिको यो धूमघटोभयाभावस्तद्वतीत्यर्थः। धूमत्वविशिष्टस्येति। साध्यतावच्छेदकीभूतस्येत्यादिः। नन्वेवं धूमघटोभयाभावस्य केवलान्वयितया तद्वति सर्वस्यैव सम्बद्धत्वात् पारिभाषिकावच्छेदकस्याप्रसिद्ध्यैव नातिव्याप्तिरत आह किन्त्वित्यादि। गगनत्वादेरेवेति।

---

अथ हेतुमन्निष्ठाऽभावप्रतियोगितावच्छेदकं यद्धर्मपर्याप्तयनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकभेदप्रतियोगितानवच्छेदकं स धर्मः पारिभाषिकावच्छेदकः इत्युक्तावेव सकलदोषवारणसम्भवे अनतिरिक्तवृत्तित्वनिवेशनं स्वसमानवृत्तिकत्वनिवेशनञ्च व्यर्थमिति चेन्न ? वह्निधूमोभयवान् धूमादित्यादावव्याप्त्यापत्तेः हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूततत्तद्वह्नित्वस्य वह्निधूमोभयत्वावच्छिन्नाऽनुयोगिताकभेदप्रतियोगितानवच्छेदकत्वात्, व्यासज्यवृत्तिधर्मावच्छिन्नाऽनुयोगिताकैकदेशभेदाऽनभ्युपगमादिति विभावनीयम्।

किन्तु स्वावच्छिन्नेति। नन्वेवमपि वह्निमान् धूमादित्यत्राऽव्याप्तिः हेतुमन्निष्ठाऽभावप्रतियोगितावच्छेदकस्य घटत्वादेः स्वावच्छिन्नप्रतियोगित्वसम्बन्धेन वह्नि-

प्रतियोगित्वं साध्यतावच्छेदकसम्बन्धेन ग्राह्यम्, तेनायं घट एतत्त्वादि-

आदिना आत्मत्वादिपरिग्रहः । तथा च तत्तस्यैव गगनत्वादिविशिष्ट-गगनादेस्तादृशोभयाभावादिमत्यसत्त्वात्, गगनत्वादावेव तादृशपारि-भाषिकाऽवच्छेदकत्वप्रसिद्ध्याऽविव्याप्तिः स्यात्, यदि तादृशतदव-च्छिन्नाभावप्रवेशो न स्यादिति भावः ।

हेतुसमानाधिकरणाऽभावप्रतियोगितावच्छेदकीभूततत्तद्धर्मावच्छिन्ना-भावप्रवेशे तु न तत्राऽतिव्याप्तिः तादृशधूमत्वावच्छिन्नाभाववति तप्तायः-पिण्डादौ धूमत्वविशिष्टस्याऽसम्बद्धत्वादित्याह तदवच्छिन्नेतीति । नच तदवच्छिन्नाभावस्य प्रवेशेऽपि धूमवान् वह्नेरित्यादावतिव्याप्तिः, वह्नि-मन्निष्ठाऽभावप्रतियोगितावच्छेदकधूमत्वघटत्वादियावद्धर्मावच्छिन्नाऽभा-ववति धूमत्वविशिष्टस्य सम्बद्धत्वादिति वाच्यम् ? हेत्वधिकरणवृत्तिप्रतियो-गितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृ-त्तिप्रतियोगिताकाभाववदसम्बद्धत्वस्य विवक्षितत्वात् । वृत्तित्वं स्वावच्छे-दकसम्बन्धावच्छिन्नस्वावच्छेदकावच्छिन्नाधिकरणत्वसम्बन्धावच्छिन्नस्व-निष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन, रूपवृत्तित्वञ्च स्वाच्छे-दकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । तथा च व्यभिचारिमात्र एव साध्याद्यभावीयतत्तत्प्रतियोगितामादा-यैवाऽतिव्याप्तेर्वारणं सम्भवतीति बोध्यम् । अत एव विषयितया वह्नि-साध्यकज्ञानत्वहेतौ तादृशप्रतियोगितावच्छेदकीभूतवह्नित्वावच्छिन्नाऽभाव-वति महानसीयवह्निज्ञाने महानसीयवह्नित्वविशिष्टस्य सम्बद्धत्वेऽपि नाऽतिव्याप्तिः, तादृशमहानसीयवह्नित्वावच्छिन्नाऽभाववति वह्न्यादि-विषयकज्ञाने महानसीयवह्नित्वविशिष्टस्याऽसम्बद्धत्वादिति ध्येयम् ।

**प्रतियोगित्वमिति** । तदवच्छिन्नाभावीयमित्यादिः । साध्यतावच्छे-दकसम्बन्धेन = साध्यतावच्छेदकसम्बन्धावच्छिन्नम् । तृतीयाया अवच्छि-

त्वव्यापकत्वात् वह्नित्ववन्निष्ठतादृशसम्बन्धावच्छिन्नघटत्वाऽभावप्रतियोगितावच्छेदक-ताया लाघवेन समवाय एव कल्पनीयत्वादिति चेत्, प्रतियोगितावच्छेदकसम्बन्धे गुरुत्वज्ञानस्याऽप्रतिबन्धकत्वादिति ध्येयम् ।

निरुक्तलक्षणाऽनुगमस्तु हेतुमन्निष्ठाऽभावप्रतियोगितावच्छेदकविशिष्टान्यत्वं साध्यतावच्छेदके वक्तव्यम् । वैशिष्ट्यञ्च स्ववृत्तित्व, स्वनिष्ठोभयावृत्तिधर्मावच्छिन्न-

त्यादौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यत् पटत्वं सम्बन्धसामान्येन कालिकसम्बन्धेन वा तदवच्छिन्नाभाववति नित्यगुणगगनादौ घटत्वत्वविशिष्टस्यासम्बद्धत्वेऽपि नाव्याप्तिः ।

---

ञत्वार्थकत्वात् । तेन = साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य तादृशप्रतियोगिताविशेषणत्वेन । एतत्त्वादित्यादौ = समवायेन घटत्वसाध्यकैतत्त्वादिहेतौ । आदिपदात् तादृशसाध्यकतद्व्यक्तित्वहेतोः परिग्रहः । तदवच्छिन्नाभावीयप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाविवक्षणे अयं घटत्ववानेतत्त्वादित्यादौ समवायेन घटत्वसाध्यकेऽव्याप्तिः, एतत्त्ववति घटे वर्त्तमानस्य समवायेन द्रव्याभावस्य प्रतियोगितावच्छेदकं यत् द्रव्यत्वं तदवच्छिन्नस्य संयोगसमवायकालिकाद्यन्यतमसम्बन्धात्मकसम्बन्धसामान्येन कालिकसम्बन्धेन वाऽभाववति नित्यगुणगगनादौ घटत्वत्वरूपसाध्यतावच्छेदकविशिष्टस्य घटत्वस्य समवायेनाऽसम्बद्धत्वात्, साध्यतावच्छेदकघटत्वत्वस्यैव पारिभाषिकावच्छेदकत्वादतस्तादृशप्रतियोगिता साध्यतावच्छेदकसम्बन्धावच्छिन्ना वाच्या, तथा च न तत्राव्याप्तिः, तादृशप्रतियोगितावच्छेदकद्रव्यत्वावच्छिन्नस्य समवायेनाभाववति घटे घटत्वत्वविशिष्टस्य घटत्वस्य समवायेन सम्बद्धत्वात् तदसम्बद्धद्रव्यत्वविशिष्टसामान्यकद्रव्यत्वस्यैव पारिभाषिकाऽवच्छेदकत्वादित्याह **हेतुमन्निष्ठेति** । सम्बन्धसामान्येन = कालिकसंयोगसमवायाद्यन्यतमसम्बन्धेन । अनुगतसम्बन्धावच्छिन्नतादृशप्रतियोगितानिवेशसूचनायाह कालिकसम्बन्धेन **वेति** । यत्तु यत्किञ्चित्सम्बन्धेन तदवच्छिन्नाभावप्रवेशलाभार्थमाह कालिकसम्बन्धेन वेतीति मतं तन्मन्दं, तथा सति निरुक्तस्थलेऽव्याप्तिदानाऽसंगत्यापत्तेः यत्किञ्चित्समवायेन तादृशद्रव्यत्वावच्छिन्नाऽभाववति घटत्वत्वविशिष्टस्य सम्बद्धत्वात् । तदवच्छिन्नाऽभाववति=तादृशद्रव्यत्वावच्छिन्नाभाववति । **नाव्याप्तिरिति** । न च वह्निमान् धूमादित्यादिप्रसिद्धस्थलेऽपि हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकघटत्वाद्यवच्छिन्नस्य कालिकेनाभाव-

---

प्रतियोगिताकाऽभाववद्वृत्तित्वसंसर्गावच्छिन्नस्वनिष्ठाऽवच्छेदकताकप्रतियोगिताकभेद - वत्त्वोभयसम्बन्धेन । वृत्तित्वं स्वपर्याप्त्यनवच्छेदकीभूतव्यासज्यवृत्तिधर्मानवच्छिन्न-

पर्वतादेरुत्पत्तिकालावच्छेदेन संयोगसम्बन्धावच्छिन्नधूमाभाववत्त्वात्, तत्र च धूमत्त्वविशिष्टस्य सम्बद्धत्वात् तदसम्बद्धस्वविशिष्टसामान्यकं गगनत्वादिकमुपादाय धूमवान्वह्नेरित्यादावतिव्याप्तिरतः प्रतियोगिव्यधिकरणत्वेन तदवच्छिन्नाभावो विशेष्यः ।

प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नासम्बन्धी तदवच्छिन्नाभाववान् ग्राह्य इति तु पर्यवसितार्थः । तेन संयोगसम्बन्धा-

---

वति गगनादौ वह्नित्वविशिष्टस्यासम्बद्धत्वादव्याप्तिसम्भवे निरुक्तस्थलान्तरानुसरणमनुचितमिति वाच्यम् ? तादृशगगनादौ वह्नित्वविशिष्टस्य वह्नेः संयोगेन सम्बद्धतया वह्नित्वस्य पारिभाषिकानवच्छेदकत्वादिति ध्येयम् ।

ननूक्तलक्षणे धूमवान् वह्नेरित्यादावतिव्याप्तिः, वह्निमन्निष्ठाभावप्रतियोगितावच्छेदकधूमत्वावच्छिन्नस्य संयोगेनाभावस्योत्पत्तिकालावच्छेदेन पर्वतादौ सत्त्वात् तत्र च धूमत्वविशिष्टस्य धूमस्य संयोगेन सम्बद्धत्वात् तादृशपर्वताद्यसम्बद्धगगनत्वादिविशिष्टसामान्यकगगनत्वादिभिन्नत्वस्य साध्यतावच्छेदकीभूतधूमत्वेऽनपायादत आह **पर्वतेति** । संयोगेन वस्तुमात्रस्य दैशिकाऽव्याप्यवृत्तित्वे प्रमाणाभावादाह्नोत्पत्तीति । तत्र च = तादृशपर्वतादौ च । **तदसम्बद्धेति** । तादृशपर्वताद्यसम्बद्धगगनत्वादिविशिष्टसामान्यकगगनत्वादिकमित्यर्थः । तदवच्छिन्नाभावः=हेतुसमानाधिकरणतादृशाभावप्रतियोगितावच्छेदकावच्छिन्नाभावः । तदवच्छिन्नाभावे प्रतियोगिव्यधिकरणत्वं यदि प्रतियोगितावच्छेदकावच्छिन्नाधिकरणाऽवृत्तित्वं तदा सामानाधिकरण्यस्याऽव्याप्यवृत्तित्वमते धूमवान् वह्नेरित्यादौ पुनरतिव्याप्तिः, पर्वतेऽपि धूमाभावस्य प्रतियोगिव्यधिकरणत्वसम्भवादत आह-**प्रतियोगितेति** । स्वप्रतियोगितावच्छेदकसम्बन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नसम्बन्धी यो यस्तत्तद्व्यक्तित्वावच्छिन्नभेदकूटवान् तदवच्छिन्नाऽभावसम्बन्धी ग्राह्य इत्यर्थः । तेन सामान्यतः प्रतियोग्यसम्बन्धित्वस्याऽप्रसिद्धत्वेऽपि न क्षतिः, न वा भेदस्याव्याप्यवृत्तितया

---

पर्याप्तिकत्वसम्बन्धेन । अभावीयप्रतियोगिता च अवच्छेदकताविशिष्टाऽन्या ग्राह्या, वैशिष्ट्यं स्वनिरूपितत्वस्वभिन्नाऽवच्छेदकतानिरूपितत्वोभयसम्बन्धेन ।

वच्छिन्नधूमाभावस्य धूमवत्पर्वतादौ समवायादिसम्बन्धेन प्रतियोगिव्यधिकरणत्वेऽपि धूमत्वस्य नावच्छेदकत्त्वहानिः, न वा द्रव्यं घटत्वादित्यादौ

धूमवान् वह्नेरित्यादावतिव्याप्तिः। स्वपदस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नतादृशप्रतियोगितावच्छेदकावच्छिन्नाभावपरत्वात्। तथा च न धूमवान् वह्नेरित्यादावतिव्याप्तिः, तादृशप्रतियोगितावच्छेदकधूमत्वावच्छिन्नासम्बन्धित्वस्य पर्वतादावसत्त्वात् तादृशतदवच्छिन्नासम्बन्धिनि तप्तायःपिण्डादौ धूमत्वविशिष्टस्यासम्बद्धत्वादिति ध्येयम्।

प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धित्वविवक्षायाः फलमाह **तेनेति**। प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धित्वविवक्षणेनेत्यर्थः। प्रतियोगितावच्छेदकसम्बन्धेन तादृशप्रतियोग्यसम्बन्धित्वानभिधाने यत्किञ्चित्सम्बन्धेनैव साध्यतावच्छेदकसम्बन्धेन तदवच्छिन्नाभावप्रतियोगितावच्छेदकावच्छिन्नाऽसम्बन्धित्वं तदवच्छिन्नाभावसम्बन्धिनि वक्तव्यम्, न तु सम्बन्धसामान्येन तत्र तथात्वं वाच्यम्, तथासति वह्निमान् धूमादित्यादौ **असम्भवः स्यात्**। धूमादिमन्निष्ठाभावप्रतियोगितावच्छेदकघटत्वाद्यवच्छिन्नस्य सम्बन्धसामान्येनाभाववति

**असम्भवः स्यादिति**। न च कालो घटवान् महाकालत्वादित्यत्र लक्षणगमनसम्भवात् कथमसम्भव इति वाच्यम्? महाकालान्यत्वविशिष्टघटाभावमादाय तत्राऽपि लक्षणाऽगमनात्। न च तत्र प्रतियोगिवैयधिकरण्यविरहात् तस्य लक्षणघटकत्वमेव न सम्भवतीति वाच्यम्? तत्राऽपि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणत्वसम्भवादिति ध्येयम्। न चैवमपि वह्निमान् धूमादित्यत्राऽव्याप्तिः, हेतुसमानाधिकरणमहानसीयवह्न्यभावप्रतियोगितायां वह्नित्वाऽन्यूनवृत्तिवह्नित्वावच्छिन्नत्वसंयोगावच्छिन्नत्वयोः द्वयोः सत्त्वादिति वाच्यम्? तादृशप्रतियोगितायां अवच्छेदकताविशिष्टान्यत्वस्य विवक्षितत्वात्। वैशिष्ट्यञ्च स्वनिरूपितत्वस्वाऽन्यावच्छेदकतानिरूपितत्वोभयसम्बन्धेनेति दिक्।

**तदवच्छिन्नेति**। अत्र हेत्वधिकरणविशिष्टधर्मस्यैव पारिभाषिकावच्छेदकत्वमुच्यतां किं निरुक्तलक्षणानुसरणेन? वैशिष्ट्यं स्वनिरूपितसम्बद्धत्वाभाववृत्तित्वसम्बन्धेन। वृत्तित्वञ्च स्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वसम्बन्धेन। अथवा हेत्वधिकरणनिष्ठोभयाऽवृत्तिधर्मावच्छिन्नावच्छेदकतानिरूपिता या सम्बद्धतात्वनिष्ठाऽवच्छेदकता तन्निरूपकप्रतियोगिताकाऽभाववृत्तिभेदीयप्रतियोगितानिरूपितावच्छेदकता-

हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद् घटभिन्नद्रव्यत्वत्वं प्रतियोग्यनधिकरणे तदवच्छिन्नाभाववति गुणादौ द्रव्यत्वत्वविशिष्टस्यासत्त्वेऽप्यव्याप्तिः ।

---

नित्यरूपगगनादौ वह्नित्वादिविशिष्टस्य संयोगेनाऽसम्बद्धतया साध्यतावच्छेदकस्यैव पारिभाषिकावच्छेदकत्वात्, तथा च धूमवान् वह्नेरित्यादावतिव्याप्तिः, वह्निमन्निष्ठाभावप्रतियोगितावच्छेदकधूमत्वावच्छिन्नस्य यत्किञ्चित्समवायसम्बन्धेनाऽसम्बन्धित्वस्य संयोगेन तादृशधूमत्वावच्छिन्नाभाववति पर्वतादौ विद्यमानत्वात्, तत्र च धूमत्वविशिष्टस्य सम्बद्धतया तदसम्बद्धस्वविशिष्टसामान्यकगगनत्वादिभिन्नत्वस्य धूमत्वेऽनपायादित्याह **धूमवत्पर्वतादावित** । आदिना महानसादिपरिग्रहः । **नावच्छेदकत्वहानिरिति** । प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धित्वविवक्षणे तु न धूमवान् वह्नेरित्यादावतिव्याप्तिः संयोगेन तादृशधूमत्वावच्छिन्नाभावप्रतियोगितावच्छेदकसंयोगसम्बन्धन धूमत्वावच्छिन्नस्याऽसम्बद्धतायाः पर्वतादौ विरहात् तदसम्बन्धिन्ययोगोलकादौ धूमत्वविशिष्टस्याऽसम्बद्धत्वादिति भावः ।

ननु प्रतियोगितावच्छेदकसम्बन्धेन तदवच्छिन्नाऽभावप्रतियोगिताश्रयाऽसम्बन्धित्वमेव तदवच्छिन्नाभावसम्बन्धिनि विवक्ष्यतां किं तादृशप्रतियोगितावच्छेदकावच्छिन्नाऽसम्बन्धित्वनिवेशेनेत्यत आह **न वेति** । अव्याप्तिरिति परेणान्वयः । **द्रव्यमित्यादि** । द्रव्यत्ववान् घटत्वादित्यादावित्यर्थः । तेन न साध्यतावच्छेदकस्याऽप्रसिद्ध्याऽव्याप्त्यभिधानमसंगतमपि सम्भावनीयमिति ध्येयम् । अव्याप्तिमुपपादयति **हेतुमन्निष्ठेतीति** । घटत्वादिमन्निष्ठेत्यर्थकम् । **घटभिन्नेति** । घटभेदविशिष्टं यत् द्रव्यत्वं तत्त्वमित्यर्थः । **प्रतियोग्येति** । घटभिन्नद्रव्यत्वत्वावच्छिन्नाभावीयप्रतियोगिताश्रयद्रव्यत्वाऽसम्बन्धिनीत्यर्थः । तदवच्छिन्नाभाववति-

---

त्वावच्छिन्नावच्छेदकतानिरूपितप्रतियोगित्वभेदवृत्तित्वधर्मनिष्ठाऽवच्छेदकतानिरूपितावच्छेदकतावद्धर्मः पारिभाषिकावच्छेदकः स्यादिति चेन्न, द्रव्यं द्रव्यजात्यन्यतरत्वादित्यत्राऽतिव्याप्त्यापत्तेः, जातिनिरूपितसमवायाऽवच्छिन्नसम्बद्धत्वाऽप्रसिद्धेः । न च सत्तावान् भावत्वादित्यादिभिः समानमिति वाच्यम् ? तत्राऽतिव्याप्तेरिष्टत्वात्, अत्राऽतिव्याप्तेस्तदवच्छिन्नेत्यादिविवक्षयैव वारणसम्भवादिति ध्येयम् ।

वस्तुतो निरुक्तप्रतियोग्यनधिकरणत्वमेव तदवच्छिन्नाभाववतः साध्यतावच्छेदकसम्बन्धेन वाच्यम् न तु प्रतियोगितायास्तत्सम्बन्धावच्छिन्नत्वं, वृत्त्यनियामकसम्बन्धेन साध्यतायां तत्सम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्ध्या अव्याप्तिप्रसङ्गादिति ध्येयम् ।

=घटभिन्नद्रव्यत्वत्वावच्छिन्नाभावसम्बन्धिनि । अव्याप्तिरिति । तदवच्छिन्नाभावप्रतियोगितावच्छेदकधर्मावच्छिन्नप्रतियोगित्वाश्रयसम्बन्धी यस्तदवच्छिन्नाभावसम्बन्धी तदसम्बद्धस्वविशिष्टसामान्यकत्वस्य पारिभाषिकावच्छेदकत्वस्वरूपत्वे द्रव्यत्ववान् घटत्वादित्यादौ अव्याप्तिः, घटत्वादिमति वर्त्तमानस्य घटभिन्नत्वविशिष्टद्रव्यत्वाभावस्य प्रतियोगितावच्छेदकीभूततादृशद्रव्यत्वत्वावच्छिन्नाभावप्रतियोगित्वाश्रयकेवलद्रव्यत्वासम्बन्धित्वस्य गुणादावेव सत्त्वेन तादृशासम्बन्धित्वविशिष्टघटभिन्नद्रव्यत्वत्वावच्छिन्नाभावसम्बन्धित्ववति गुणादौ साध्यतावच्छेदकद्रव्यत्वत्वविशिष्टस्याऽसम्बद्धत्वात् । तदवच्छिन्नाभावप्रतियोगितावच्छेदकावच्छिन्नाऽसम्बन्धित्वविवक्षणे तु न तत्राऽव्याप्तिः, तादृशप्रतियोगितावच्छेदकघटभिन्नद्रव्यत्वत्वावच्छिन्नाभावप्रतियोगितावच्छेदकघटभिन्नत्ववैशिष्ट्यद्रव्यत्वत्वावच्छिन्नासम्बन्धिनि घटे द्रव्यत्वत्वविशिष्टस्य सम्बद्धत्वात् घटभिन्नत्वविशिष्टद्रव्यत्वत्वविशिष्टस्य तत्रासम्बद्धत्वेऽपि तादृशद्रव्यत्वत्वावच्छिन्नविशेष्यताभिन्नविशेष्यतावच्छेदकत्वस्य साध्यतावच्छेदके द्रव्यत्वत्वेऽनपायादित्यग्रे व्यक्तीभविष्यतीति हृदयम् ।

ननु तदवच्छिन्नाभावीयप्रतियोगित्वं यदि साध्यतावच्छेदकसम्बन्धावच्छिन्नं ग्राह्यं तदा वृत्त्यनियामकस्वामित्वसम्बन्धेन धनादेः साध्यतायां चैत्रत्वहेतावव्याप्तिः, वृत्त्यनियामकस्वामित्वसम्बन्धावच्छिन्नप्रतियोगित्वस्याऽप्रसिद्धेरित्याह **वस्तुत इति** । **निरुक्तेति** । तादृशतदवच्छिन्नाभावप्रतियोगितावच्छेदकावच्छिन्नाऽसम्बन्धित्वमेवेत्यर्थः । तदवच्छिन्नाभाववतः=तदवच्छिन्नाभावसम्बन्धिनः । **वाच्यमिति** । तथा साध्य-

घटत्वत्वविशिष्टस्येति । सम्बन्धसामान्येनेत्यस्याभिप्रायो यथा । हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकविशिष्टत्वमर्थः । वैशिष्ट्यम् स्वावच्छिन्नप्रतियोगिताकाभावकूटाधिकरणनिरूपितसम्बद्धत्वाऽभाववृत्तित्वसम्बन्धेन । कालिकेनेत्यस्याभि-

न च घटवान् महाकालत्वादित्यादौ तादृशप्रतियोगितावच्छेदकं यद् गगनत्वं तदवच्छिन्नाभावस्य प्रतियोगिवैयधिकरण्याप्रसिद्ध्याऽव्याप्तिरिति

तावच्छेदकसम्बन्धेन निरुक्ततदवच्छिन्नाभावप्रतियोगितावच्छेदकावच्छिन्नाऽसम्बन्धी यः तत्सम्बन्धावच्छिन्नप्रतियोगिताकस्तदवच्छिन्नाभावसम्बन्धी तत्राऽसम्बद्धं यद्धर्मविशिष्टसामान्यं स धर्मः पारिभाषिकावच्छेदक इत्यस्यैव विवक्षणीयतया न वृत्त्यनियामकसम्बन्धेन साध्यतायां सद्धेताव-व्याप्तिः, हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकीभूतघटत्वाद्यवच्छिन्नस्य समवायेनाभाववति चैत्रादौ स्वामित्वसम्बन्धेन तादृशाभावप्रतियोगितावच्छेदकघटत्वावच्छिन्नाऽसम्बन्धित्वस्य सत्त्वात् तत्र स्वामित्वसम्बन्धेनाऽसम्बद्धत्वं घटत्वविशिष्टस्य न तु धनत्वविशिष्टस्येति घटत्वस्यैव पारिभाषिकावच्छेदकत्वसम्भवात् । न वा धूमवान् वह्नेरित्यत्राऽप्यतिव्याप्तिः, संयोगेन तादृशधूमत्वावच्छिन्नाऽसम्बन्धिनि धूमत्वावच्छिन्नाभाववति तप्तायःपिण्डादौ संयोगेन धूमत्वविशिष्टस्याऽसम्बद्धत्वादित्याशयः ।

**प्रतियोगितायाः** इति । तदवच्छिन्नाभावेत्यादिः । तत्सम्बन्धावच्छिन्नत्वं=साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वम । **अव्याप्तिप्रसंगादिति ।** स्वामित्वसम्बन्धेन धनादिसाध्यकचैत्रत्वादिहेतावित्यादिः ।

ननु प्रतियोगितानवच्छेदकत्वघटितलक्षणे घटवान् महाकालत्वादित्यादौ सम्बन्धधर्मिकोभयाभावघटितलक्षणानुसारेण गगनाभावस्यैव हेतु समानाधिकरणाभावपदेनावश्यं धर्त्तव्यतया तादृशाभावप्रतियोगितावच्छेदकं यत् गगनत्वं तदवच्छिन्नाभावसम्बन्धिनि विशेषणीभूतस्य तदवच्छिन्नाऽसम्बन्धित्वरूपप्रतियोगिवैयधिकरण्यस्याऽप्रसिद्धत्वात् कालिकेन घटसाध्यकमहाकालत्वहेतावव्याप्तिः, कालिकेन गगनत्वावच्छिन्नस्य सम्बन्धित्वस्याऽप्रसिद्धत्वादित्याशंकते **न चेति ।** वाच्यमिति परेणान्वयः । **तादृशेति** हेतुसमानाधिकरणप्रतियोगिव्यधिकरणाऽभावप्रति-

प्रायस्तु तादृशावच्छेदकविशिष्टत्वमर्थः, वैशिष्टयम् स्वावच्छिन्नप्रतियोगिताकाऽभाववत्त्वसम्बन्धेन । अभाववत्त्वञ्च स्वाधिकरणनिरूपितसम्बद्धत्वाऽभाववृत्तित्वसम्बन्धेन । उभयत्र वृत्तित्वम् स्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वसम्बन्धेन । एवं प्रकारविधयाऽपि पूर्वोक्त एवाऽनुगमः करणीयः ।

वाच्यम् ? अत्रापि साध्यतावच्छेदकसम्बन्धसामान्ये तादृशधर्मावच्छिन्नप्रतियोगिकत्वयद्यदनुयोगिकत्वोभयाभावस्तदसंबद्धत्वस्य विवक्षितत्वात् ।

---

योगितावच्छेदकमित्यर्थः । तदवच्छिन्नाभावस्य=गगनत्वावच्छिन्नाऽभावस्य। प्रतियोगीति=गगनत्वावच्छिन्नस्य सम्बन्ध्यप्रसिद्धया तदवच्छिन्नाभावसम्बन्धिनि विशेषणीभूतस्य तदवच्छिन्नासम्बन्धित्वरूपप्रतियोगिवैयधिकरण्यस्याऽप्रसिद्धयेत्यर्थः ।

साध्यतावच्छेदकसम्बन्धसामान्ये यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावस्तादृशसम्बन्धसामान्य एव तादृशप्रतियोगितावच्छेदकधर्मावच्छिन्नप्रतियोगिकत्व-यद्यद्व्यक्त्यनुयोगिकत्वोभयाभावस्तत् तद्व्यक्त्यावसम्बद्धं यद्धर्मविशिष्टसामान्यं स धर्मः पारिभाषिकावच्छेदक इत्युक्तौ न घटवान् महाकालत्वादित्यादावव्याप्तिः, साध्यतावच्छेदकीभूतकालिकसम्बन्धसामान्ये गगनत्वावच्छिन्नप्रतियोगिकत्वमहाकालानुयोगिकत्वोभयाभावस्याक्षततया तादृशसम्बन्ध एव गगनत्वावच्छिन्नप्रतियोगिकत्वमहाकालघटादिरूपतत्तद्व्यक्त्यनुयोगिकत्वयोर्द्वयोरभावसत्त्वात् तादृशमहाकालादितत्तद्व्यक्तौ गगनत्वविशिष्टस्य गगनस्याऽसम्बन्धतया गगनत्वस्यैव पारिभाषिकाऽवच्छेदकत्वसम्भवात् । घटत्वावच्छिन्नप्रतियोगिकसंयोगे यत्किञ्चिज्जलाद्यनुयोगिकत्वविरहेणोभयाभावसत्त्वात् तादृश्याञ्च जलादिव्यक्तौ वह्नित्वादिविशिष्टस्य वह्न्यादेरसम्बद्धतया वह्निमान् धूमादित्यादौ वह्नित्वमपि पारिभाषिकावच्छेदकं स्यादतो यद् यदिति वीप्सानुसरणम् । तथा सति यद्यदन्तर्गतपर्वताद्यनुयोगिकत्वस्यापि तादृशघटसंयोगे विरहात् तादृशपर्वतव्यक्तौ च वह्नित्वविशिष्टं नाऽसम्बद्धमपि तु घटत्वविशिष्टमेवेति घटत्वस्यैव पारिभाषिकावच्छेदकत्वात् न कोऽपि दोष इति समाधत्ते अत्रापीति । तदवच्छिन्नाभावेत्यादिलक्षणेऽपीत्यर्थः । तादृश-

---

तदवच्छिन्नाऽसम्बन्धी ग्राह्य इति । अस्याऽनुगमस्तु हेत्वधिकरणवृत्तिप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताविशिष्टधर्मः पारिभाषिकावच्छेदकः । वृत्तित्वं स्वावच्छेदकावच्छिन्नानधिकरणत्वसम्बन्धेन । वैशिष्ट्यञ्च स्वविशिष्टाधिकरणनिरूपित वृत्तित्वाभाववृत्तित्वसम्बन्धेन । वैशिष्ट्यं स्वविशिष्टनिरूपकताकाधिकरणतावद्-

तदसंबद्धत्वमपि साध्यतावच्छेदकसम्बन्धेन सम्बद्धत्वसामान्याभावो बोध्यः ।

---

प्रतियोगितावच्छेदकेति । साध्यतावच्छेदकसम्बन्धसामान्ये यादृश-प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावस्तादृशप्रतियोगितावच्छेदकतेत्यर्थकम् ।

असम्बद्धत्वमपीति । प्रतियोगितावच्छेदकावच्छिन्नाऽसम्बन्धी यः प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाऽभावप्रतियोगितावच्छेदकावच्छिन्नाभावसम्बन्धी तन्निरूपितसम्बद्धत्वाभावोऽपीत्यर्थः । साध्यतावच्छेदकसम्बन्धेनेति । तादृशसम्बद्धत्वाभावप्रतियोगिसम्बद्धत्वान्वयि अवच्छिन्नत्वं तृतीयार्थः । तादृशेति । निरुक्तसम्बन्धिनिरूपितसम्बद्धत्वसामान्याभाव इत्यर्थः । साध्यतावच्छेदकसम्बन्धेन तादृशसम्बद्धत्व-

---

भिन्नत्वसम्बन्धेन । वैशिष्ट्यं निरूपकतायां स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वावच्छेदकधर्मावच्छिन्नत्वोभयसम्बन्धेन । तादृशवृत्तित्वाऽभाववृत्तित्वञ्च पूर्वोक्तसम्बन्धेन । प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यानुक्तौ धूमवान् वह्नेरित्यत्राऽतिव्याप्तेरभिप्रायो यथा हेत्वधिकरणवृत्तिप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताविशिष्टत्वमर्थः । वैशिष्ट्यं स्वविशिष्टाधिकरणनिरूपितवृत्तित्वाऽभाववृत्तित्वसम्बन्धेन, वैशिष्ट्यमधिकरणे स्वावच्छेदकावच्छिन्ननिरूपकतावत्त्वसम्बन्धेन । निरूपकतावत्त्वञ्च स्वनिरूपिताधिकरणतावद्भिन्नत्वसम्बन्धेन । वृत्तित्वं पूर्वोक्तसम्बन्धेन ।

द्रव्यं घटत्वादिति । अत्राऽव्याप्तेरभिप्रायो यथा—तादृशप्रतियोगिताविशिष्टत्वमर्थः । वैशिष्ट्यं स्वविशिष्टाधिकरणनिरूपितवृत्तित्वाभाववृत्तित्वसम्बन्धेन । वैशिष्ट्यमधिकरणे स्वविशिष्टनिरूपकताकाधिकरणतावद्भिन्नत्वसम्बन्धेन । वृत्तित्वं स्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वसम्बन्धेन । वैशिष्ट्यम् निरूपकतायां स्वावच्छिन्नत्व-स्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेनेत्यनयैव रीत्याऽन्यत्राऽप्यनुगमो बोध्यः ।

अत्रापि साध्यतेति । ननु हेत्वधिकरणीभूतयत्किञ्चिद्द्रव्यानुयोगिकत्वयद्धर्मावच्छिन्नप्रतियोगिकत्वानि यावन्ति तत्प्रत्येकस्य द्वयोर्व्यतिरेकः स धर्मः पारिभाषिकावच्छेदक इत्युच्यतां किं गुरुतरनिवेशेनेति चेन्न, निरुक्तस्य लक्षणान्तरत्वादिति विभावनीयम् ।

तेन घटत्वाद्यवच्छिन्नाभाववति घटत्वगगनत्वविशिष्टस्यापि यथाकथञ्चित्तादात्म्यादिना सम्बद्धतया न पारिभाषिकावच्छेदकाप्रसिद्धिनिबन्धनो व्याप्तिलक्षणासम्भवः ।

न वा तादृशप्रतियोगितावच्छेदकीभूतमहानसीयवह्नित्वावच्छिन्नाभाववति जलादौ वह्नित्वविशिष्टस्यासंबद्धत्वाद्वह्निमान् धूमादित्यादावव्याप्तिः । धूमवन्निष्ठाभावप्रतियोगितावच्छेदकीभूततत्तद्वह्नित्वावच्छिन्नाभाववति वह्नित्वविशिष्टस्य तत्तद्वह्नेरसंबद्धत्वाद्वह्निमान् धूमादित्यादौ वह्नित्वमप्यवच्छेदकं स्यादतः सामान्यपदम् ।

ननु कालिकादिसंबन्धेन गगनत्वविशिष्टं घटादि तस्य तादृशप्रतियोगितावच्छेदकीभूतगगनत्वाद्यवच्छिन्नाभाववति साध्यताघटकसंयोगादिसंबन्धेन सम्बद्धत्वात् पारिभाषिकावच्छेदकाप्रसिद्ध्या व्याप्तिलक्षणासम्भवः ।

---

विवक्षायाः प्रयोजनमाह, **तेनेति** । साध्यताघटकसम्बन्धेन तादृशसम्बन्धिनिरूपितसम्बद्धत्वस्य निवेशे चेत्यर्थः । यदि सम्बन्धसामान्यावच्छिन्नं तादृशप्रतियोगितावच्छेदकावच्छिन्नाभावसम्बन्धिनिरूपितं सम्बद्धत्वं विवक्ष्यते तदा पारिभाषिकावच्छेदकाऽप्रसिद्ध्या वह्निमान् धूमादित्यादौ सर्वत्रासम्भवः स्यात् धूमवन्निष्ठाभावप्रतियोगितावच्छेदकघटत्वाद्यवच्छिन्नाभाववति पर्वतादौ कलिकेन घटत्वादिविशिष्टस्य गगनादौ च गगनत्वादिविशिष्टस्य तादात्म्येन सम्बद्धतया घटत्वगगनत्वादेः कस्यापि पारिभाषिकावच्छेदकत्वाऽसम्भवात् । साध्यतावच्छेदकसम्बन्धेन तादृशसम्बद्धत्वविवक्षणे तु नासम्भवः, घटत्वादिविशिष्टस्य घटादेः संयोगेन घटत्वाद्यवच्छिन्नाभाववति पर्वतादावसम्बद्धतया घटत्वादेरेव पारिभाषिकावच्छेदकत्वसम्भवादित्याह **घटत्वेति** ।

तादृशसम्बन्धिनिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नसम्बद्धत्वसामान्याभावप्रवेशप्रयोजनमाह **न वेति** । हेतुमन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नाभावसम्बन्धियत्किञ्चिन्निरूपितसम्बद्धत्वस्याभावविवक्षणे वह्निमान् धूमादित्यादावव्याप्तिः, धूमवन्निष्ठतादृशाभावप्रतियोगितावच्छेदकं यत् महानसीयवह्नित्वं तदवच्छिन्ना-

न च साध्यतावच्छेदकताघटकसम्बन्धेन स्ववैशिष्ट्याभिधानान्नैष दोषः। पुरुषनिष्ठसंयोगसम्बन्धेन दण्डवतः कालिकविशेषणतया साध्यतायां महाकालत्वहेतावव्याप्त्यापत्तेः । गगनत्वादेः पुरुषनिष्ठसंयोगसम्बन्धेनावृत्त्या पारिभाषिकावच्छेदकाप्रसिद्धेः ।

न च हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वं यादृशसम्बन्धावच्छिन्नं तेनैव सम्बन्धेन स्ववैशिष्ट्याभिधानाद् घटत्वगगनत्वादौ पारिभाषिकावच्छेद-

---

भावसम्बन्धियत्किञ्चिज्जलादिनिरूपितसंयोगावच्छिन्नसम्बद्धत्वाभावस्य वह्नित्वविशिष्टे वह्निसामान्ये सत्त्वेन वह्नित्वस्यैव यद्धर्मपदेन धर्त्तुं शक्यतया तस्यैव पारिभाषिकावच्छेदकत्वादतस्तादृशसम्बद्धत्वसामान्याभावो निवेशनीयः। तथासति तादृशमहानसीयवह्नित्वावच्छिन्नाभावसम्बन्धिसम्बद्धत्वसामान्यान्तर्गतपर्वतादिनिरूपितसम्बद्धत्वस्य वह्नित्वविशिष्टेऽभावविरहान्नाव्याप्तिरित्याह तादृशेति । धूमवन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदकीभूतमहानसीयवह्नित्वावच्छिन्नाभावसम्बन्धिनीत्यर्थः ।

न च महानसीयवह्नित्वस्य साध्यतावच्छेदकतदितरोभयानवच्छिन्नप्रतियोगितानवच्छेदकतया तादृशमहानसीयवह्नित्वमादायाव्याप्तिदानमसंगतमिति वाच्यम् ? महानसीयवह्नित्वपदेन महानसीयव्यक्तित्वस्य महानसीयतेजस्त्वस्य वा विवक्षितत्वात् । निरुक्तपारिभाषिकावच्छेदकत्वलक्षणसत्त्वे मूलोक्तलक्षणघटकीभूतहेतुमन्निष्ठाभावप्रतियोगितायां साध्यतावच्छेदकतादितरोभयानवच्छिन्नत्वस्याऽविवक्षणेऽपि क्षत्यभावाच्च । न चैवं तादृशघटाद्यभावप्रतियोगितावच्छेदकघटत्वाद्यवच्छिन्नाभावसम्बन्धिजलादिसम्बद्धत्वाभावस्य वह्नित्वविशिष्टे वह्निसामान्ये सत्त्वात् तादृशप्रतियोगितावच्छेदकीभूतघटत्वादिकमादायापि वह्निमान् धूमादित्यत्राव्याप्तिसम्भवे तादृशाभावप्रतियोगितावच्छेदकमहानसीयवह्नित्वमादायाव्याप्तिदानमनुचितमिति वाच्यम् ? तादृशाभावप्रतियोगितावच्छेदका-

---

पुरुषनिष्ठेति । अत्र पुरुषनिष्ठेति व्यर्थमिति तु नाशंक्यम् ? गगनमात्रसंयुक्तपरमाण्वादेः पारिभाषिकावच्छेदकत्वसंभवेन अव्याप्तिदानस्याऽसंगतत्वापत्तेः, गगनत्वावच्छिन्नाभाववति संयोगेन परमाणुविशिष्टस्य गगनस्याऽसम्बद्धत्वात् ।

कत्वं सुलभमिति वाच्यम् ? धूमत्वप्रकारकप्रमाविशेष्यवान् वह्नेरित्यादौ

वच्छिन्नाऽसम्बन्धिसम्बद्धाभाववद्‍यद्धर्मविशिष्टसामान्यमित्यत्र यद्धर्मे स्वाश्रयाऽभिन्नतादृशप्रतियोगितावच्छेदकाश्रयकत्वस्य विवक्षणात् घटत्वादिप्रतियोगितावच्छेदकमादायाव्याप्त्यसम्भवात् महानसीयवह्नित्वरूपतादृशाभावप्रतियोगितावच्छेदकमादायैव तादृशसामान्याभावप्रवेशप्रयोजनस्योपवर्णितत्वात् घटादेः वह्नित्वाश्रयाभिन्नत्वाऽसम्भवात् । अत एवासम्भवं परित्यज्याव्याप्तिरेवाभिहिता । अन्यथा महानसीयवह्निमान् तद्धूमादित्यत्रापि हेतुमन्निष्ठघटाद्यभावप्रतियोगितावच्छेदकमादायैव लक्षणगमनाऽसम्भवादसम्भवसम्भवे अव्याप्त्यभिधानमसंगतं स्यादिति तु विभावनीयम् ।

तादृशाभावप्रतियोगितावच्छेदकावच्छिन्नासम्बन्धितदवच्छिन्नाभावसम्बन्धिनिरूपितसम्बद्धत्वसामान्याभाववद्‍यद्धर्मावच्छिन्नसामान्यमित्यत्र द्वितीयसामान्यपदानुपादाने घटत्वाभावपटत्वाभावान्यतरत्ववान् घटपटान्यतरत्वादित्यत्राऽव्याप्तिः हेतुमन्निष्ठतादृशाभावप्रतियोगितावच्छेदकघटभेदत्वावच्छिन्नाभावसम्बन्धिघटनिरूपितसम्बद्धत्वसामान्याभावस्य घटत्वाभावपटत्वाभावान्यतरत्वविशिष्टे घटत्वाभावे सत्त्वेन तादृशसाध्यतावच्छेदकान्यतरत्वस्यैव पारिभाषिकावच्छेदकत्वात्, तादृशसामान्यपदेन तु द्रव्यत्ववान् प्रमेयत्वादित्यादौ साध्यतावच्छेदकद्रव्यत्वत्वविशिष्टसामान्याऽप्रसिद्ध्या ऽतिव्याप्तिभिया यद्धर्मव्यापकताया निरुक्तसम्बद्धत्वाभावे विवक्षणीयतया निरुक्तान्यतरत्वव्यापकत्वस्य घटसम्बद्धत्वाभावे विरहान्न तत्राऽव्याप्तिरिति ध्येयम् । धूमवन्निष्ठाभावप्रतियोगितावच्छेदकतत्तद्वह्नित्वावच्छिन्नाऽभाववति वह्नित्वविशिष्टस्य तत्तद्वह्नेरसम्बद्धत्वाद्वह्निमान् धूमादित्यादौ वह्नित्वमपि पारिभाषिकावच्छेदकं स्यादतः द्वितीयसामान्यपदमिति पाठस्तु न समीचीनः, तत्तद्वह्नित्वावच्छिन्नाभाववत्सम्बद्धत्व-

धूमत्वप्रकारकेति । ननु तादात्म्येन घटविशिष्टस्य साध्यत्वे कपालत्वसद्धेतौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदककपालत्वावच्छिन्नाभाववति भूतलादौ प्रतियोगितावच्छेदकताघटकसमवायेन घटविशिष्टस्य कपालस्य समवायेनावृत्तेः । अथवा कालिकेन ज्ञानत्वविशिष्टस्य समवायेन साध्यत्वे कपालत्वसद्धेतावपि तादृशप्रतियोगितावच्छेदकीभूतेच्छात्वावच्छिन्नाभाववति कपालादौ प्रतियोगितावच्छेदकताघटकसमवायेन ज्ञानत्वविशिष्टस्यावृत्तेरव्याप्तिसम्भवेऽतिव्याप्तिदानमसंगतमिति चेन्न ।

अतिव्याप्तेः । साध्यतावच्छेदकमपेक्ष्य लघोर्धूमत्त्वस्यैव समवायेन हेतुमन्नि-
ष्ठसंयोगसंबन्धावच्छिन्नाभावप्रतियोगितावच्छेदकतया समवायेन च धूमत्व-

सामान्याभावस्य वह्नित्वविशिष्टे कुत्रापि वह्न्यावसत्त्वादिति तु सुधीभिर्वि-
वेचनीयम् ।

साध्यतावच्छेदकसम्बन्धेन तादृशप्रतियोगितावच्छेदकावच्छिन्ना-सम्बन्धितदवच्छिन्नाऽभावसम्बन्धिसम्बद्धत्वसामान्याभाववद् यद्धर्म-विशिष्टसामान्यं स धर्मः पारिभाषिकावच्छेदक इति लक्षणे यद्धर्मवैशिष्ट्यं यदि सम्बन्धसामान्येन विवक्षितं स्यात् तदा वह्निमान् धूमादित्यादौ सर्वत्राऽसम्भवः, तादृशघटत्वाद्यवच्छिन्नाभावसम्बन्धिपर्वतादौ कालिकेन घटत्वविशिष्टस्य वह्न्यादेः संयोगेन तादृशगगनत्वावच्छिन्नाभाववत्यपि भूतलादौ कालिकेन गगनत्वविशिष्टस्य घटादेः संयोगेन सम्बद्धतया कस्यापि पारिभाषिकावच्छेदकत्वाऽसम्भवात् इत्येवं नन्वित्यादिना आशंक्य तटस्थः शंकते **नचेत** । नैष दोष इति परेणान्वयः ।

**स्ववैशिष्ट्याभिधानात्**=निरुक्तयद्धर्मवैशिष्ट्याभिधानात् । **नैष दोष इति** ।
तथा च वह्निमान् धूमादित्यादौ तादृशाभावप्रतियोगितावच्छेदकघटत्वा-द्यवच्छिन्नाभाववति पर्वतादौ साध्यतावच्छेदकताघटकीभूतसमवाय-सम्बन्धेन घटत्वादिविशिष्टस्य घटादेः संयोगेनासम्बद्धतया घटत्वादेरेव पारिभाषिकावच्छेदकत्वसम्भवान्न पारिभाषिकावच्छेदकाप्रसिद्ध्या असम्भवः सम्भवतीति भावः ।

साध्यतावच्छेदकताघटकसम्बन्धेन यद्धर्मवैशिष्ट्यविवक्षणेऽपि न निस्तार इत्याह **पुरुषनिष्ठेति** । पुरुषानुयोगिकसंयोगेनेत्यर्थः । **साध्यतायामिति** । तथा च दण्डिमान् महाकालत्वादित्यादावव्याप्त्यापत्तेरिति भावः । **महा-कालत्वादिति** । आदिना महाकालानुयोगिककालिकसम्बन्धेन घटादे-र्हेतुतापरिग्रहः । अव्याप्तिं संगमयति **गगनत्वादेरिति** । तथा च प्रतियोगि-तानवच्छेदकत्वघटितलक्षणे कालिकसम्बन्धेन निरुक्तदण्डिसाध्यकमहा-कालत्वहेतुकस्थले गगनत्वादेरेव प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रति-

साध्यतावच्छेदकताघटकसम्बन्धातिरिक्तत्वसाध्यतावच्छेदकंप्रतियोगिकत्वोभयाभाववत् प्रतियोगितावच्छेदकताघटकसम्बन्धेन स्ववैशिष्ट्यस्य विवक्षितत्वादव्याप्तेरसम्भ-

प्रकारकप्रमाविशेष्यत्वस्यावृत्त्या तस्य पारिभाषिकावच्छेदकत्वाभावप्रसङ्गात् । न च साध्यत्वताद्दशप्रतियोगित्वयोरन्यतरावच्छेदकताघटकसंबन्धेनैव स्ववैशि-

योगितावच्छेदकतया ताद्दशगगनत्वावच्छिन्नाभावसम्बन्धिनि महाकाले पुरुषानुयोगिकसंयोगसम्बन्धेन दण्डविशिष्टस्यैव कालिकसम्बन्धेन सम्बद्ध-तया गगनत्वादेस्ताद्दशसम्बन्धेन वैशिष्ट्याप्रसिद्धया यद्धर्मपदेन गगनत्वादे-र्धर्त्तुमशक्यत्वात् तस्यापि पारिभाषिकावच्छेदकत्वासम्भवादिति हृदयम् ।

न चैवं घटवान् महाकालत्वादित्यत्राऽपि साध्यतावच्छेदकताघटक-समवायसम्बन्धेन गगनत्वादिवैशिष्ट्याऽप्रसिद्धया पारिभाषिकावच्छेद-काऽप्रसिद्धयाऽव्याप्तिसम्भवे पुरुषानुयोगिकसंयोगेन दण्डविशिष्टस्य साध्य-त्वानुसरणं व्यर्थमिति वाच्यम् ? समवायेन शब्दविशिष्टस्य गगनस्य गगनत्वावच्छिन्नाभाववति महाकालेऽसम्बद्धतया शब्दादेः पारिभाषि-कावच्छेदकतया घटवान् महाकालत्वादित्यत्राऽव्याप्त्यसम्भवात् पुरुष-निष्ठसंयोगेन दण्डविशिष्टस्य कालिकेन साध्यत्वानुसरणस्यावश्यकत्वात् ।

न च तथापि घटत्वप्रतियोगिकसमवायसम्बन्धेन घटत्वविशिष्टस्य कालिकेन साध्यतायां महाकालत्वहेतौ ताद्दशाभावप्रतियोगितावच्छेदकस्य गगनत्वादेः घटत्वप्रतियोगिकसमवायसम्बन्धेनापि वैशिष्ट्याप्रसिद्धया अव्याप्तिसम्भवे पुरुषनिष्ठेत्याद्यभिधानमसंगतमिति वाच्यम् ? समवायस्यै-कत्वेन घटत्वप्रतियोगिकत्वेन तस्य भेदविरहात् समवायमात्रस्यैव घट-त्वप्रतियोगिकसमवायपदेन धर्त्तुं शक्यत्वात् । नचैवं संयोगमात्रेणैव दण्डवतः कालिकेन साध्यतायां महाकालत्वहेतावपि ताद्दशगगनत्वादेः तेन सम्बन्धेन वैशिष्ट्याऽप्रसिद्धयाऽव्याप्तिसम्भवे पुरुषनिष्ठपर्यन्तानुसरण-मफलमिति वाच्यम् ? संयोगेन घटविशिष्टस्य गगनस्य निरुक्तगगनत्वा-वच्छिन्नाभाववति महाकाले कालिकेनासम्बद्धतया घटादेरेव ताद्दशस्थले पारिभाषिकावच्छेदकत्वसम्भवेन तत्राऽव्याप्त्यसम्भवात् पुरुषनिष्ठपर्य-न्तानुसरणस्यावश्यकत्वात् । न च तथापि पुरुषनिष्ठपर्यन्तानुसरणमसंगतं दण्डप्रतियोगिकसंयोगेनाऽपि दण्डवतः कालिकेन साध्यतायां महाकाल-

वादिति ध्येयम् । अथ तथापि कथमत्राऽतिव्याप्तिः अयोगोलकावृत्तिर्नास्तीत्यभाव-मादायैवातिव्याप्तिवारणसम्भवादिति चेन्न, तादात्म्येन धूमवतः संयोगेन साध्यतायां

स्वहेतौ तादृशसंयोगेन गगनत्ववैशिष्ट्यस्याऽप्रसिद्धतयाऽव्याप्तिसम्भवा-दिति वाच्यम् ? दण्डप्रतियोगिकसंयोगसम्बन्धेन दण्डविशिष्टस्य गगनस्य तादृशगगनत्वावच्छिन्नाभाववति महाकाले कालिकेनासम्बद्धतया दण्ड-स्यैव पारिभाषिकावच्छेदकत्वसम्भवात्, तादृशसम्बन्धेन दण्डस्य साध्यता-वच्छेदकत्वे ऽव्याप्तेरिष्टत्वेऽपि पारिभाषिकावच्छेदकस्याप्रसिद्धयाऽव्याप्ति-प्रदर्शनार्थं पुरुषनिष्ठपर्यन्तस्यानुसरणादिति ध्येयम् ।

ननु हेतुमन्निष्ठतादृशाभावीयप्रतियोगितावच्छेदकताघटकसम्बन्धेन यद्धर्मवैशिष्ट्यविवक्षणान्न कोऽपि दोषः वह्निमान् धूमादित्यादौ तादृश-घटत्वावच्छिन्नाभाववति पर्वतादौ प्रतियोगितावच्छेदकताघटकसमवायेन घटत्वविशिष्टस्यासम्बद्धत्वात्, तादृशदण्डिसाध्यकस्थले तु स्वरूपेण गगन-त्वविशिष्टस्यैव महाकालेऽसम्बद्धत्वात् तत्र तत्र घटत्वगगनत्वादेरेव पारि-भाषिकावच्छेदकत्वसम्भवादित्याशंकते न चेति । तेन सम्बन्धेन = तादृ-शप्रतियोगितावच्छेदकतावच्छेदकसम्बन्धेन । स्ववैशिष्ट्याऽभिधा-नात् = पारिभाषिकावच्छेदकत्वेनाभिमतधर्मवैशिष्ट्याभिधानात् । धूम-त्वेति । धूमत्वं प्रकारो यत्र प्रमायां यथार्थज्ञाने तादृशप्रमाविशेष्यवान् इत्यर्थः । इत्यादाविति । आदिना द्रव्यत्वादिपरिग्रहः । केवलविशेष्यस्य प्रमाविशेष्यमात्रस्य वा साध्यत्वे तस्य केवलान्वयितया वह्निमत्यपि सर्वत्र सत्त्वात्, वह्न्यादेः सद्धेतुत्वेन तत्राऽतिव्याप्त्यभिधानस्यानौचित्यं स्यादतः धूमत्वेति । धूमत्वप्रकारकज्ञानविशेष्यत्वस्यापि सर्वत्र सत्त्वात् तस्य साध्यत्वे वह्न्यादेः सद्धेतुत्वं स्यादतः प्रमेति । साध्यतावच्छेदकम् = धूमत्वप्रका-रकप्रमाविशेष्यत्वम् । हेतुमन्निष्ठेति । वह्निमन्निष्ठसंयोगावच्छिन्नसा-ध्याभावप्रतियोगितावच्छेदकतयेत्यर्थः । समवायेनेति । प्रतियोगिता-वच्छेदकताघटकीभूतेनेत्यादिः । तस्य = धूमत्वप्रकारकप्रमाविशेष्य-त्वस्य ।

---

वह्निहेतावतिव्याप्तेरेव ग्रन्थार्थत्वात्, स्वरूपेण धूमवैशिष्ट्याऽप्रसिद्धया अयोगोल-कावृत्तित्वस्यैव पारिभाषिकावच्छेदकत्वात् । न चैवं अन्यतरसम्बन्धनिवेशे उक्तस्थले एवातिव्याप्तेर्वक्ष्यमाणतया उत्तरग्रन्थानुत्थितिप्रसंग इति वाच्यम्, अन्यतरनिवेशे उक्तस्थलेऽतिव्याप्त्यसम्भवस्यानुपदमेव निरूपणीयत्वात् ।

च्छ्यस्य विवक्षणान्नोक्ताव्याप्त्यतिव्याप्त्योः प्रसङ्ग इति वाच्यम् ? तादा त्म्येन धूमवतः संयोगेन साध्यतायां द्रव्यत्वादावतिव्याप्त्यापत्तेः ।

पारिभाषिकेति । तथा च प्रतियोगितावच्छेदकताघटकसम्बन्धेन यद्धर्मवैशिष्ट्यविवक्षणे धूमत्वप्रकारकप्रमाविशेष्याभावस्य संयोगेन धूमाभावसमानदेशवृत्तिकतया संयोगेन वह्निमन्निष्ठधूमत्वप्रकारकप्रमाविशेष्याभावप्रतियोगितावच्छेदकत्वस्य धूमत्व एव लाघवात् कल्पनीयतया तादृशधूमत्वावच्छिन्नाभाववति तत्प्रायःपिण्डे प्रतियोगितावच्छेदकताघटकसमवायसम्बन्धेन धूमत्वप्रकारकप्रमाविशेष्यत्ववैशिष्ट्याऽप्रसिद्ध्या तस्य यद्धर्मपदेन धर्तुमशक्यत्वात्, धूमत्वस्य यद्धर्मपदेन धर्तुं शक्यत्वेऽपि तादृशधूमत्वभिन्नत्वस्य साध्यतावच्छेदके धूमत्वप्रकारकप्रमाविशेष्यत्वे सत्त्वादिति समुदिततात्पर्यम् ।

न चेति वाच्यमिति परेणान्वयः । साध्यत्वेति । साध्यतावच्छेदकताघटकसम्बन्धेन हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकताघटकान्यतरसम्बन्धेनेत्यर्थः । स्ववैशिष्ट्याभिधानात् = पारिभाषिकावच्छेदकत्वेनाभिमतयद्धर्मवैशिष्ट्यविवक्षणात् । नोक्ताव्याप्त्येति । पूर्वोक्तपुरुषनिष्ठसंयोगेन दण्डविशिष्टस्य कालिकेन साध्यतायां महाकालत्वहेताव्याप्तेः धूमत्वप्रकारकप्रमाविशेष्यवान् वह्नेरित्यादावतिव्याप्तेरित्यर्थः ।

प्रसङ्ग इति । तथा च साध्यतावच्छेदकताघटकसम्बन्धप्रतियोगितावच्छेदकताघटकसम्बन्धान्यतरसम्बन्धेन यद्धर्मवैशिष्ट्यविवक्षणे नोक्तदण्डिनः कालिकेन साध्यतायां महाकालत्वहेताव्याप्तिः हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकगगनत्वावच्छिन्नाभाववति महाकाले तादृशान्यतरीभूतप्रतियोगितावच्छेदकताघटकस्वरूपसम्बन्धेन गगनत्वविशिष्टस्य कालिकेनाऽसम्बन्धतया गगनत्वादेरेव पारिभाषिकावच्छेदकत्वसम्भवात् । न वा धूमत्वप्रकारकप्रमाविशेष्यवान् वह्नेरित्यादावतिव्याप्तिः, वह्निमन्निष्ठसाध्याभावप्रतियोगितावच्छेदकधूमत्वावच्छिन्नाभाववति अयोगोलके निरुक्तान्यतरसाध्यतावच्छेदकताघटकस्वरूपसम्बन्धेन धूमत्वप्रकारकप्रमाविशेष्यत्वविशिष्टस्य तादृशविशेष्यस्याऽसम्बद्धत्वेन साध्यतावच्छेदकस्यैव पारिभाषिकावच्छेदकत्वादित्याशयः ।

निषेधे हेतुमाह तादात्म्येनेति । धूमवतः = धूमविशिष्टस्य धूमस्य । द्रव्यत्वादाविति । आदिना वह्न्यादिपरिग्रहः ।

धूमापेक्षया लघुत्वेन हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्धूमत्वं तदवच्छिन्ना-भाववति तत्तत्परमाणौ प्रतियोगितावच्छेदकताघटकसमवायसंबन्धेन धूमविशिष्टस्य परमाणौ साध्यताघटकसंयोगसंबन्धेन संबद्धतया धूमस्य पारिभाषिकावच्छे-

---

अतिव्याप्तौ हेतुमाह धूमापेक्षयेति । यदि साध्यतावच्छेदकताघटकसम्बन्धप्रतियोगितावच्छेदकताघटकसम्बन्धान्यतरसम्बन्धेन यद्धर्मवैशिष्ट्यं विवक्ष्यते तदा तादात्म्येन धूमविशिष्टधूमस्य संयोगेन साध्यतायां द्रव्यत्वहेतावतिव्याप्तिः, तादात्म्येन धूमविशिष्टधूमस्य संयोगेनाऽभावस्य संयोगावच्छिन्नप्रतियोगिताकधूमाभावसमनियततया तादृशधूमविशिष्टधूमाभावप्रतियोगितावच्छेदकतायाः लाघवात् समवायेन धूमत्व एव कल्पनीयतया हेतुमन्निष्ठतादृशसाध्याभावप्रतियोगितावच्छेदकधूमत्वावच्छिन्नाभाववति धूमीयपरमाणौ तादृशान्यतरीभूतसमवायसम्बन्धेन साध्यतावच्छेदकधूमविशिष्टस्य परमाण्वन्तरस्य संयोगेन सम्बद्धतया धूमस्य यद्धर्मपदेनोपादानाऽसम्भवात् धूमत्वस्य यद्धर्मपदेनोपादातुं शक्यत्वेऽपि तद्भिन्नतायाः साध्यतावच्छेदके धूमेऽनपायादित्याह लघुत्वेनेत्यादि ।

न च तादात्म्येन तत्तद्धूमविशिष्टस्य संयोगेनाभावस्यापि हेतुमन्निष्ठतया तदीयप्रतियोगितावच्छेदकतत्तद्धूमभिन्नत्वस्य साध्यतावच्छेदके धूमे विरहात् कथमतिव्याप्तिरिति वाच्यम् ? धूमप्रतियोगिकतादात्म्येन धूमविशिष्टस्य संयोगेन साध्यतायां द्रव्यत्वहेतावतिव्याप्तेर्वारयितुमशक्यत्वात् तेन सम्बन्धेन तत्तद्धूमादिवैशिष्ट्यस्याऽप्रसिद्धत्वात् तादात्म्येन तत्तद्धूमविशिष्टाभावप्रतियोगितावच्छेदकतायाः समवायेन तत्तद्धूमत्वे

---

धूमस्य पारिभाषिकेति । न चाऽत्रापि अयोगोलकावृत्त्यभावमादाय नातिव्याप्तिः तादृशाभावप्रतियोगितावच्छेदकताघटकस्वरूपसम्बन्धेन धूमवैशिष्ट्याऽप्रसिद्धया तादृशान्यतरीभूतसाध्यतावच्छेदकताघटकतादात्म्यसम्बन्धेन धूमविशिष्टस्य संयोगेन अयोगोलकावृत्तित्वावच्छिन्नाभाववत्यसम्बद्धत्वादिति वाच्यम् ? तादात्म्येन घटत्वाभाववतः स्वरूपेण साध्यत्वे घटपटान्यतरत्वहेतावतिव्याप्तेरभिप्रेतत्वात् लाघ-

दकत्वविरहादिति चेत्। अत्राहुः, यद्यत्संबन्धेन यद्धर्मविशिष्टसामान्यं निरुक्तधर्मावच्छिन्नाभाववति साध्यतावच्छेदकसंबन्धेनासंबद्धं तत्तत्संबन्धेन

---

लाघवेन कल्पनीयत्वेऽपि अतिव्याप्तिसम्भवाच्चेति ध्येयमधिकमन्यत्रानुसन्धेयम्।

नन्वित्यादेरुत्तरमत्राहुरिति। यद्यत्सम्बन्धेनेत्यादि। प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकावच्छिन्नाभाववन्निरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नसम्बद्धत्वसामान्याभाववद्यत्सम्बन्धेन यद्यद्धर्मविशिष्टसामान्यं तत्तत्सम्बन्धावच्छिन्नतत्तद्धर्मनिष्ठावच्छेदकताकविशेष्यताभिन्नं यत् साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकविशेष्यत्वं तदवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्य व्याप्तिरिति पर्यवसितार्थः। एवञ्च न पारिभाषिकावच्छेदकाऽप्रसिद्धया वह्निमान् धूमादित्यादावसम्भवः, समवायेन घटत्वादिविशिष्टस्यैव तादृशघटत्वाद्यवच्छिन्नाभाववति पर्वतादावसम्बद्धतया समवायावच्छिन्नघटत्वनिष्ठावच्छेदकताकविशेष्यताभिन्नत्वस्य वह्नित्वावच्छिन्नविशेष्यतायां सत्त्वेन निरुक्तरीत्या सर्वत्र लक्षणसमन्वयसम्भवात्। पुरुषनिष्ठसंयोगेन दण्डविशिष्टस्य कालिकेन साध्यतायां महाकालत्वहेतावपि नाव्याप्तिः, तादृशगगनत्वावच्छिन्नाभाववति महाकाले स्वरूपसम्बन्धेन गगनत्वविशिष्टस्य गगनस्य कालिकेनावृत्त्या स्वरूपावच्छिन्नगगनत्वनिष्ठावच्छेदकताकविशेष्यताभेदस्य पुरुषनिष्ठसंयोगावच्छिन्नावच्छेदकताकदण्डिनिष्ठविशेष्यतायां सत्त्वात्।

एवं धूमत्वप्रकारकप्रमाविशेष्यवान् वह्नेरित्यादौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकधूमत्वावच्छिन्नाभाववति अयोगोलके स्वरूपसम्बन्धेन धूमत्वप्रकारकप्रमाविशेष्यत्वविशिष्टस्य तादृशविशेष्यस्यासम्बन्धतया स्वरूपसम्बन्धावच्छिन्नतादृशविशेष्यत्वनिष्ठावच्छेदकताकविशेष्यत्वभिन्नत्वस्य धूमत्वप्रकारकप्रमाविशेष्यत्वनिष्ठतादृशसम्बन्धावच्छिन्नावच्छेदक-

---

वात् साध्याभावप्रतियोगितावच्छेदकताया घटत्वाभावनिष्ठतद्व्यक्तित्व एव कल्पनीयतया प्रतियोगितावच्छेदकताघटकस्वरूपसम्बन्धेन घटावृत्त्यभावीयप्रतियोगितावच्छेदकताघटकेनाऽपि तेनैव सम्बन्धेन घटत्वाभावविशिष्टस्य मठाभावस्य निरुक्ततदवच्छिन्नाभाववति घटे सम्बद्धत्वात् यद्धर्मपदेन घटत्वाभावस्य वक्तुमशक्यत्वात्

तत्तद्धर्मावच्छिन्नविशेष्यताभिन्नं यत्साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नं विशेष्यत्वं तदवच्छेदकसाध्यतावच्छेदकधर्मवत्त्वस्य विवक्षितत्वान्नोक्तदोषः। समवायेन वह्नित्वावच्छिन्नविशेष्यतायाः स्वरूपादिसम्बन्धेन गगनत्वावच्छिन्न-विशेष्यताभिन्नत्वादेवावच्छेदकाप्रसिद्धिनिबन्धनासम्भवस्य व्युदासादिति।

नन्वेवमपि विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिः, तादृशद्रव्यत्वा-

---

ताकविशेष्यतायामभावान् नातिव्याप्तिः। न वा तादात्म्येन धूमविशिष्टस्य संयोगेन साध्यतायां द्रव्यत्वहेतावतिव्याप्तिः, तादृशधूमत्वावच्छिन्नाभाववति सर्वत्रैव तादात्म्येन धूमविशिष्टस्य संयोगेनाऽसम्बद्धतया तादात्म्यसम्बन्धावच्छिन्नधूमनिष्ठावच्छेदकताकविशेष्यताभेदस्य तादात्म्येन धूमविशिष्टरूपसाध्यनिष्ठविशेष्यतायामवर्त्तमानत्वादिति दिक्।

लक्षणान्तरावतरणबीजं प्रदर्शयितुं शङ्कते **नन्वेवमपीति**। निरुक्तरीत्या लक्षणार्थस्य निर्वचनेऽपीत्यर्थः। **विशिष्टेति**। तथा च यथोक्तलक्षणे विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिः, हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकताया द्रव्यत्वत्वे सत्त्वेऽपि तादृशद्रव्यत्वत्वावच्छिन्नाभाववति गुणादौ विशिष्टसत्तात्वविशिष्टस्य सम्बद्धत्वात् तत्राऽसम्बद्धद्रव्यत्वत्वविशिष्टद्रव्यत्वत्वभिन्नत्वस्य विशिष्टसत्तात्वे सत्त्वादिति भावः।

---

तादृशघटावृत्तित्वभिन्नत्वस्य साध्यतावच्छेदके घटत्वाभावे सत्त्वात्। एतेन स्वरूपसाध्यतावच्छेदकताघटकान्यतरसम्बन्धेन स्ववैशिष्ट्यविवक्षणान्न तादात्म्येन धूमवतः साध्यत्वे व्यभिचारिण्यतिव्याप्तिरित्यपि परास्तमुक्तस्थल एवातिव्याप्तेरिति ध्येयम्।

अथ तथापि तादृशान्यतरसम्बन्धेन यद्धर्माश्रयीभूतं प्रतियोगित्वसाध्यत्वाश्रयीभूतं यत् निरुक्ततदवच्छिन्नाभावत्यसम्बद्धं तादृशयद्धर्मविशिष्टसामान्यं तस्य पारिभाषिकावच्छेदकत्वोक्तौ न कुत्राप्यतिव्याप्तिरिति चेन्न ? सामानाधिकरण्यसम्बन्धेन घटभेदविशिष्टस्य प्रमेयस्य स्वरूपेण साध्यत्वे वाच्यत्वहेतावतिव्याप्त्यापत्तेः साध्याभावप्रतियोगितावच्छेदकताया लाघवेन घटभेदत्व एव कल्पनीयतयातादृशघटभेदत्वावच्छिन्नाभाववति घटे साध्यताश्रयीभूतस्य घटभेदविशिष्टवाच्यत्वस्य स्वरूपेण सम्बद्धत्वात् अन्यविधाभावस्यैव लक्षणघटकत्वात्।

नन्वेवमपि तादृशान्यतरसम्बन्धेन स्ववैशिष्ट्यविवक्षणे कालिकेन घटत्वविशिष्टस्य कालिकेन साध्यतायां महाकालत्वहेतौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकगगनत्वा-

द्यभाववति गुणादौ विशिष्टसत्त्वस्य सम्बद्धत्वात् । स्वस्य तादृशधर्मावच्छिन्ना-भाववन्निष्ठसम्बन्धितानवच्छेदकत्व विवक्षया कथञ्चित्तत्रातिव्याप्तिवारणेऽपि सत्तावान् भावत्वादित्यादावतिव्याप्तिः । सत्तात्वाद्यवच्छिन्नाभाववति सामा-न्यादौ साध्यताघटकसमवायसंबन्धेन सम्बन्धित्वाप्रसिद्धेः, सत्तात्वस्य निरु-

---

ननु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकावच्छिन्नाभाववन्निष्ठसम्ब-न्धितानिरूपितसम्बद्धत नवच्छेदकीभूतो यो धर्मस्तस्यैव पारिभाषिकाव-च्छेदकत्वं वाच्यम् , तथा च न विशिष्टसत्तावान् जातेरित्यादावति-व्याप्तिः, विशिष्टसत्तात्वे तादृशद्रव्यत्वत्वावच्छिन्नाभाववद्गुणादिनिष्ठ-सम्बन्धितानिरूपितसम्बद्धतानवच्छेदकत्वस्य सत्त्वेन विशिष्टसत्तात्व-स्यैव पारिभाषिकावच्छेदकत्वसम्भवादित्याह **स्वस्येति** । पारिभाषिका-वच्छेदकत्वेनाभिमतधर्मस्येत्यर्थः । **तादृशेति** । हेतुमन्निष्ठाभावप्रति-योगितावच्छेदकधर्मावच्छिन्नाभाववन्निरूपितसाध्यतावच्छेदकसम्बन्धा-वच्छिन्नसम्बद्धतानवच्छेदकत्वविवक्षयेत्यर्थः । सत्तात्वे तादृशधर्माव-च्छिन्नाभाववद्गुणसम्बन्धितावच्छेदकत्वसत्त्वे विशिष्टसत्तात्वेऽपि ता-दृशगुणसम्बन्धितावच्छेदकत्वस्यानपायात् निरुक्तविवक्षयाऽपि नोक्ताऽति-व्याप्तिवारणं सम्भवतीत्यत आह **कथञ्चिदिति** ।

निरुक्तविवक्षयाऽपि सत्तावान् भावत्वादित्यादावतिव्याप्तिं संगम-यति **सत्तात्वेति** । भावत्वाधिकरणजातिनिष्ठाभावप्रतियोगितावच्छे-दकीभूतेत्यादिः । **सामान्यादाविति** । आदिना समवायपरिग्रहः । **अप्रसिद्धेरिति** । तथा च सत्तात्वावच्छिन्नाभाववद्जातिनिरूपित-समवायसम्बन्धावच्छिन्नसम्बद्धत्वाऽप्रसिद्धया सत्तात्वं न हेतुमन्निष्ठा-

---

वच्छिन्नाभाववति महाकाले कालिकेन गगनत्वविशिष्टजन्यस्य सम्बद्धतया पारिभाषि-कावच्छेदकाऽप्रसिद्धयाऽव्याप्तिसम्भवेऽतिव्याप्त्यभिधानमनुचितमिति चेन्न, तादा-त्म्येन गगनविशिष्टाभावमादाय गगनस्यैव पारिभाषिकावच्छेदकत्वसम्भवात् तादृश-गगनाभाववति तादात्म्येन गगनविशिष्टस्यासम्बद्धत्वात् कालिकेन गगनवैशिष्ट्यस्या-प्रसिद्धत्वात् । न च तथापि विषयितया ज्ञानत्वविशिष्टस्य कालिकेन साध्यतायां

क्तावच्छेदकत्वाभावात् । न च साध्यतावच्छेदकसम्बन्धसामान्ये तदवच्छि-न्नाभाववदनुयोगिकत्व—यद्धर्मावच्छिन्नप्रतियोगिकत्वोभयाभावस्तत्त्वं विवक्षि-

भावप्रतियोगितावच्छेदकं अपि तु घटत्वादिकमेव, तथा च समवायेन तादृशघटत्वाद्यवच्छिन्नाभाववद्भूतलादिनिरूपितसमवायावच्छिन्नसम्ब-द्धतानवच्छेदकत्वस्य घटत्वादौ सत्त्वेन घटत्वादेरेव पारिभाषिका-वच्छेदकतया तदन्यत्वस्य साध्यतावच्छेदके विद्यमानत्वादुक्तविवक्षया सत्तावान् भावत्वादित्यादौ भवत्यतिव्याप्तिरिति भावः । निरुक्तावच्छेद-कत्वाभावात् = निरुक्तविवक्षयाऽपि पारिभाषिकावच्छेदकत्वाभावात् ।

यद्यपि साध्यतावच्छेदकसम्बन्धावच्छिन्नसम्बद्धतावच्छेदकताप्रति-योगिकस्वरूपसम्बन्धेन तदवच्छिन्नाभाववन्निरूपितसम्बद्धतावच्छेदक-त्वाभाववद्धर्मस्यैव पारिभाषिकावच्छेदकत्वविवक्षयापि निरुक्तातिव्या-प्तिर्वारयितुं शक्यते जातिनिरूपितसम्बद्धतावच्छेदकत्वसामान्यस्यैव तादृ-शसम्बन्धेनाभावस्य सत्तात्वे निराबाधत्वादित्युच्यते तथापि विशेषरूपेण संसर्गतामनभ्युपगत्यैव प्रकारान्तरेणातिव्याप्तिं वारयितुं पुनः शंकते न चेति । नोक्तदोष इति परेणान्वयः ।

साध्यतेति । साध्यतावच्छेदकसंसर्गत्वव्यापको यो हेतुमन्निष्ठा-भावप्रतियोगितावच्छेदकावच्छिन्नाभाववदनुयोगिकत्वयद्धर्मावच्छिन्नप्रति-योगिकत्वोभयाभावस्तादृशधर्मस्यैव पारिभाषिकावच्छेदकत्वं विवक्षितमि-त्यर्थः । व्यापकत्वार्थकसामान्यपदानुपादाने वह्निमान् धूमादित्यत्राव्याप्तिः यत्किञ्चिद्घटसंयोगादौ तादृशघटत्वावच्छिन्नाभाववत्पर्वतानुयोगिक-त्ववह्नित्वावच्छिन्नप्रतियोगिकत्वयोर्द्वयोरभावसत्त्वात् वह्नित्वस्यैव पारि-भाषिकावच्छेदकत्वसम्भवादतस्तादृशसामान्यपदम् ।

महाकालत्वहेतौ तादृशगगनत्वावच्छिन्नाभाववति महाकाले विषयितया गगनत्ववि-शिष्टस्य कालिकेन सम्बद्धतया पारिभाषिकावच्छेदकाऽप्रसिद्ध्याऽव्याप्तिसम्भवे कथम-तिव्याप्तिरभिहितेति वाच्यम् ? साध्यतावच्छेदकप्रतियोगिकसाध्यतावच्छेदकताघटकस-म्बन्धस्यान्यतरघटकत्वात् । अथवा पारिभाषिकावच्छेदकत्वलक्षणेऽतिव्याप्तिदोष-स्यैव गुरुतया तस्यैव पूर्वमुक्तत्वात् । वस्तुतस्तु स्वाश्रयानुयोगिकतादृशान्यतरस-म्बन्धेन यद्धर्मवैशिष्ट्यविवक्षणान्न दोषः, स्वं पारिभाषिकावच्छेदकत्वेनाभिमतम् ।

। तमतो नोक्तदोष इति वाच्यम् ? तथाऽसति प्रमेयधूमवान् वह्नेरित्यादावति-व्याप्त्यापत्तेः । धूमत्वघटिततादृशोभयत्वापेक्षया प्रमेयधूमत्वघटिततादृशोभ-

**नोक्तदोषः** इति । तथा च न विशिष्टसत्तावान् जातेरित्यादावति-व्याप्तिः, न वा सत्तावान् भावत्वादित्यादावतिव्याप्तिः, साध्यतावच्छेदक-समवायसम्बन्धे तादृशसत्तात्वावच्छिन्नाभाववज्जात्यनुयोगिकत्वसत्तात्वा-वच्छिन्नप्रतियोगिकत्वोभयाभावस्याक्षततया सत्तात्वस्यैव पारिभाषिका-वच्छेदकत्वादिति हृदयम् । न च समवायस्यैकत्वमते विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिः समवायसम्बन्ध एव तादृशद्रव्यत्वत्वा-वच्छिन्नाभाववद्गुणानुयोगिकत्वविशिष्टसत्तात्वावच्छिन्नप्रतियोगिकत्वयो-र्द्वयोः सत्त्वादिति वाच्यम् ? समवायस्य ना-ात्वमवलम्ब्यैवातिव्याप्ते-र्वारयितुं शक्यत्वात् , निरुक्तकल्पे उक्तातिव्याप्तिसत्त्वेऽपि क्षत्यभावा-च्चेति ध्येयम् ।

**तथा सतीति** । निरुक्तरीत्या लक्षणार्थस्य निर्वचने सतीत्यर्थः । साध्यतावच्छेदकसम्बन्धसामान्ये तदवच्छिन्नाभाववदनुयोगिकत्वयद्ध-र्मावच्छिन्नप्रतियोगिकत्वोभयाभावस्तु तादृशोभयत्वावच्छिन्नप्रतियो-गिताको वक्तव्यः न तु तादृशोभयनिष्ठप्रतियोगिताकस्तथाऽसति वह्निमान् धूमादित्यत्राऽव्याप्तिः स्यात् संयोगसामान्य एव घटत्वावच्छिन्नाभाववत्प-र्वतानुयोगिकत्ववह्नित्वावच्छिन्नप्रतियोगिकत्वघटैतत्त्रितयाभावस्य तादृ-शोभयनिष्ठप्रतियोगिताकस्य सत्त्वेन वह्नित्वस्यैव पारिभाषिकावच्छेदक-त्वात् , एवञ्च प्रमेयधूमवान् वह्नेरित्यत्रातिव्याप्तिः तादृशधूमत्वावच्छिन्ना-भाववदयोगोलकानुयोगिकत्वप्रमेयधूमत्वावच्छिन्नप्रतियोगिकत्वोभयत्वस्य तादृशायोगोलकानुयोगिकत्वधूमत्वावच्छिन्नप्रतियोगिकत्वोभयत्वापेक्षया गुरुतया तदवच्छिन्नप्रतियोगिताकाभावाऽप्रसिद्ध्या यद्धर्मपदेन प्रमेयधू-मत्वस्य धर्त्तुमशक्यत्वात् धूमत्वस्य तथात्वेन धर्त्तुं शक्यत्वेऽपि तादृश-धूमत्वावच्छिन्नविशेष्यताभिन्नविशेष्यतावच्छेदकत्वस्य साध्यतावच्छेदके प्रमेयधूमत्वेऽनपायादित्याह **धूमत्वेति** । धूमत्वावच्छिन्नप्रतियोगिक-त्वघटितोभयत्वापेक्षयेत्यर्थः । **प्रमेयधूमत्वेति** । प्रमेयधूमत्वावच्छिन्न-

स्वाश्रयत्वञ्च प्रतियोगितावच्छेदकताघटकसम्बन्धेन, विषयितायाः अतथात्वेन स्वरू-पस्यैव तथात्वात् , गगनत्वस्य पारिभाषिकावच्छेदकत्वसम्भवादिति ध्येयम् ।

यत्वस्य गुरुतया तदवच्छिन्नप्रतियोगित्वाप्रसिद्धेरित्यस्वरसादाह—स्ववि-

प्रतियोगिकत्वघटितोभयत्वस्येत्यर्थः । तदवच्छिन्नेति । धूमत्वावच्छि-
न्नाभाववदनुयोगिकत्वप्रमेयधूमत्वावच्छिन्नप्रतियोगिकत्वोभयत्वावच्छि-

ननु तथापि प्रतियोगितावच्छेदकप्रतियोगिकप्रतियोगितावच्छेदकताघटकसम्बन्ध-साध्यतावच्छेदकप्रतियोगिकसाध्यतावच्छेदकताघटकसम्बन्धैतदन्यतरसम्बन्धेन स्ववैशिष्ट्यविवक्षणान्नोक्तातिव्याप्तिरव्याप्तिर्वा सम्भवतीति चेन्न ? समवायेन घटत्वविशिष्टस्य विषयितासम्बन्धेन साध्यत्वे घटत्वप्रतियोगिकसमवायेन घटत्वविशिष्टविषयकज्ञानं शुद्धसमवायेन घटत्वविशिष्टविषयकज्ञानमेतदन्यतरत्वहेतावतिव्याप्त्यापत्तेः साध्याभावप्रतियोगितावच्छेदकावच्छिन्नाभाववति घटत्वप्रतियोगिकसमवायेन घटत्वविशिष्टविषयकज्ञाने निरुक्तान्यतरसम्बन्धेन साध्यतावच्छेदकीभूतघटत्वविशिष्टस्य विषयितासम्बन्धेन सम्बद्धत्वात् ।

यद्यत्सम्बन्धेनेत्यादि । अथाऽत्र तत्तत्सम्बन्धावच्छिन्नतन्निष्ठावच्छेदकताभिन्नावच्छेदकताश्रयसाध्यतावच्छेदकेत्याद्युक्तावेव तावद्दोषवारणसम्भवे विशेष्यतापर्यन्तानुधावनं व्यर्थमिति चेन्न ? विषयतावच्छेदकनिरूपकतावच्छेदकसाधारणावच्छेदकत्वाऽस्वीकारेण तत्तदवच्छेदकताभिन्नावच्छेदकतानिवेशे गौरवात् । महानसीयत्वविशिष्टवह्नित्वनिष्ठावच्छेदकताभेदस्य वह्नित्वे महानसीयत्वे च सत्त्वात् महानसीयवह्निमान् धूमादित्यत्रातिव्याप्त्यापत्तेरित्यपि वदन्ति ।

नन्वेवमपि तादृशविषयताभिन्नविषयतावच्छेदकेत्याद्युक्तावेव निर्वाहसम्भवे विशेष्यतानुधावनं निरर्थकमिति चेन्न, विशेष्यताविषयतयोः समशरीरतया लाघवगौरवाभावात् । अत एव योग्यताग्रन्थे "सा चेतरपदार्थसंसर्गेऽपरपदार्थनिष्ठाभावप्रतियोगित्वप्रमाविशेष्यत्वाभाव" इति मूलव्याख्यायां विशेष्यतानिवेशनमाशंक्य विशेष्यताविषयतयोः समशरीरत्वात् लाघवगौरवाभावात् अशोकवनिकान्यायादिति मथुरानाथः प्राह ।

न च यद्यन्निवेशेऽननुगमः इति वाच्यम् ? संसर्गताविशिष्टावच्छेदकताकविशेष्यताभिन्नविशेष्यतावच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यस्य व्याप्तित्वेऽनुगमसम्भवात्, संसर्गतावैशिष्ट्यनवच्छेदकतायां स्वविशिष्टसंसर्गताकत्व स्वव्यापकहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकावच्छिन्नाभाववन्निरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नसम्बद्धत्वाभावानुयोगितावच्छेदकधर्मनिष्ठत्वोभयसम्बन्धेन । व्यापकता च

शिष्टेति । स्वं पारिभाषिकावच्छेदकत्वेनाभिप्रेतम् । तथा च हेतुसमाना-

---

धिकरणाभावप्रतियोगिसत्त्वस्याप्रसिद्धेरित्यर्थः । इत्यस्वरसात् — निरुक्तातिव्याप्त्यादि-दोषस्य पूर्वलक्षणे सत्त्वादित्यास्तां विस्तरः ।

इति श्रीवामाचरणभट्टाचार्यविरचिता पारिभाषिकावच्छेदकत्वप्रथमलक्षणविवृतिः समाप्ता ।



## ❀ अथ द्वितीयलक्षणम् ❀

स्वविशिष्टेत्यत्र स्वपदार्थमाह स्वमिति । हेतुमन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रति-

---

स्वानुयोगितावच्छेदकतावच्छेदकत्वसम्बन्धेन । संसर्गतावैशिष्ट्यं संसर्गतायां स्वतादात्म्यसम्बन्धेनेति ध्येयम् ।

स्वस्य तादृशधर्मेति । अथात्र तादृशसम्बन्धितानिरूपितसम्बन्धसामान्यावच्छिन्नावच्छेदकताविवक्षणे घटवान् महाकालत्वादित्यादौ पारिभाषिकावच्छेदकाप्रसिद्ध्याऽव्याप्तिः स्यात्, साध्यतावच्छेदकताघटकसम्बन्धेन तथात्वोक्तौ स्ववृत्तिवाच्यत्ववत्त्वसम्बन्धेन वह्नित्ववतः संयोगेन साध्यतायां धूमहेतावव्याप्तिः पारिभाषिकावच्छेदकाऽप्रसिद्धेः । प्रतियोगितावच्छेदकताघटकसम्बन्धेन तथात्वोक्तौ च वह्नित्वप्रकारकप्रमाविशेष्यत्वप्रतियोगिकस्वरूपेण तद्वतः साध्यत्वे धूमहेतावव्याप्तिः पारिभाषिकावच्छेदकस्याप्रसिद्धत्वात्, प्रतियोगित्वसाध्यत्वान्यतरावच्छेदकताघटकसम्बन्धेन तथात्वोक्तौ तादात्म्येन धूमवतः संयोगेन साध्यत्वे वह्निहेतावतिव्याप्तिः धूमस्य पारिभाषिकानवच्छेदकत्वात् इति चेन्न ? यो यो धर्मः निरुक्ततदवच्छिन्नाभाववन्निरूपितसाध्यातावच्छेदकसम्बन्धावच्छिन्नसम्बद्धतानिरूपितयद्यत्सम्बन्धावच्छिन्नावच्छेदकत्वाभाववान् भवति तत्तत्सम्बन्धावच्छिन्नतत्तद्धर्मनिष्ठावच्छेदकताकविशेष्यताभिन्नसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकविशेष्यतावच्छेदक - साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यर्थतायाः स्वीकाराद् भवति सत्तावान् भावत्वादित्यत्रातिव्याप्तिरिति भावः ।

इति श्रीवामाचरणभट्टाचार्यसङ्कलिता पारिभाषिकावच्छेदकत्वप्रथमलक्षणमनोरमा समाप्ता ।



धिकरणाभावप्रतियोगितावच्छेदकं यद्विशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकं स एव पारिभाषिकावच्छेदकः, तदन्यत्वं साध्यतावच्छेदकविशेषणमिति भावः । अत्र स्वविशिष्टसम्बन्धित्वं साध्यतावच्छेदकसम्बन्धेन ग्राह्यम् । तेन प्रतियोगितावच्छेदकमात्रस्यैव यथाकथञ्चित्संबन्धेन यत्स्वविशिष्टसंबन्धि तन्निष्ठाभावप्रतियोगितावच्छेदकत्वेऽपि न पारिभाषिकावच्छेदकाप्रसिद्धिः ।

---

योगितानवच्छेदकं स धर्मः पारिभाषिकावच्छेदकस्तदन्यसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति समुदितभावमाह **तथा चेति** ।
एवञ्च वह्निमान् धूमादित्यादौ तादृशप्रतियोगितावच्छेदकघटत्वादेः वह्नित्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकतया वह्नित्वस्य यद्धर्मपदेन धर्त्तुमशक्यत्वात् घटत्वादेरेव यद्धर्मपदेनोपादानात् घटत्वादेरेव पारिभाषिकावच्छेदकत्वम् तदन्यत्वस्य वह्नित्वरूपसाध्यतावच्छेदके सत्त्वाल्लक्षणसमन्वयः । धूमवान् वह्नेरित्यादौ तु हेतुमन्निष्ठप्रतियोगितावच्छेदकधूमत्वस्य धूमत्वविशिष्टसम्बन्धिपर्वतादिनिष्ठाभावप्रतियोगितानवच्छेदकत्वात् धूमत्वस्यैव पारिभाषिकावच्छेदकत्वेन नातिव्याप्तिः ।

विशिष्टसत्तावान् जातेरित्यादौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकद्रव्यत्वत्वादेः विशिष्टसत्तात्वविशिष्टसम्बन्धिद्रव्यनिष्ठाभावप्रतियोगितानवच्छेदकत्वात् विशिष्टसत्तात्वमेव पारिभाषिकावच्छेदकमिति तत्रापि नातिव्याप्तिः, । सत्तावान् भावत्वादित्यादावपि तादृशप्रतियोगितावच्छेदकसत्तात्वस्य सत्तात्वविशिष्टसम्बन्धिद्रव्यादिनिष्ठाभावप्रतियोगितानवच्छेदकत्वात् सत्तात्वस्यैव पारिभाषिकावच्छेदकत्वसम्भवेन तत्राऽपि नातिव्याप्तिरिति तु परमार्थः ।

**अत्रेति** । निरुक्तलक्षणे इत्यर्थः । घटकत्वं स्वविशिष्टसम्बन्धित्वघटकत्वं स्वविशिष्टसम्बन्धित्वाभावयि सप्तम्यर्थः । तेन = साध्यतावच्छेदकसम्बन्धेन स्वविशिष्टसम्बन्धित्वविवक्षणेन । **प्रतियोगितेति** । हेतुमन्निष्ठाभावीयेत्यादिः । यथाकथञ्चित्सम्बन्धेन = कालिकादिना । स्वविशिष्टस्य = पारिभाषिकावच्छेदकत्वेनाभिमतयद्धर्मविशिष्टस्य । **पारिभाषिकेति** । तथा च वह्निमान् धूमादित्यादौ धूमवन्निष्ठाभावप्रतियोगितावच्छेदकघटत्वादेः सर्वस्यैव घटत्वा-

अभावश्चात्र प्रतियोगिव्यधिकरणो बोध्यः। तेन घटत्वाद्यवच्छेदक-मात्रस्यैव स्वविशिष्टसम्बन्धिनिष्ठसंयोगसम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकत्वात् पारिभाषिकावच्छेदकाप्रसिद्ध्या वह्निमान् धूमादित्यादौ नाव्याप्तिः।

दिविशिष्टस्य कालिकादिना सम्बन्धिनि पर्वतादौ वर्त्तमानस्य संयोगेन घटाद्यभावस्य प्रतियोगितावच्छेदकतया पारिभाषिकावच्छेदकस्याऽप्रसिद्धत्वात् असम्भवः स्यात्, यदि साध्यतावच्छेदसम्बन्धेन स्वविशिष्टस्य सम्बन्धित्वप्रवेशो न स्यादिति भावः।

नन्वेमपि संयोगेन वस्तुमात्रस्यैवाव्याप्यवृत्तितया वह्निमान् धूमादित्यादावव्याप्तिः, धूमवन्निष्ठाभावप्रतियोगितावच्छेदकघटत्वादेः घटत्वविशिष्टस्य संयोगेन सम्बन्धिनि वर्त्तमानस्य संयोगावच्छिन्नघटाद्यभावप्रतियोगितावच्छेदकत्वेन घटत्वादेः कस्यापि पारिभाषिकावच्छेदकत्वाऽसम्भवादित्यत आहाभावश्चेति। स्वविशिष्टसम्बन्धिनिष्ठाभावश्चेत्यर्थः।

प्रतियोगीति। स्वप्रतियोगितावच्छेदकसम्बन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नाऽसम्बन्धियद्धर्मविशिष्टसम्बन्धिवर्तमानो ग्राह्य इत्यर्थः। तेन=स्वविशिष्टसम्बन्धिनिष्ठाभावे निरुक्तप्रतियोगिवैयधिकरण्यविवक्षणेन। नाव्याप्तिरिति। न चासम्भवसम्भवेऽव्याप्त्यभिधानमनुचितमिति वाच्यम्? समवायेन तादात्म्येन वा वस्तुमात्रस्य व्याप्यवृत्तित्ववादिनां मते तादात्म्येन गोसाध्यकसास्नावत्त्वहेतुकस्थले हेतुमन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकघटत्वादेः घटत्वादिविशिष्टस्य तादात्म्येन सम्बन्धिघटनिष्ठभेदप्रतियोगितानवच्छेदकतया घटत्वादेरेव पारिभाषिकावच्छेदकत्वसम्भवेन तत्र लक्षणसमन्वयसम्भवादिति भावः।

ननु तादृशाभावे प्रतियोगिवैयधिकरण्यं यदि स्वप्रतियोग्यनधिकरणवृत्तित्वं तदा तथैव वह्निमान् धूमादित्यादावव्याप्तिः, संयोगेन घटानधिकरणगुणवृत्तिघटाभावस्य घटत्वविशिष्टसम्बन्धिनि भूतलादावपि वृत्तेः। यदि प्रतियोग्यधिकरणावृत्तित्वरूपं तदाऽपि वह्निमान् धूमादित्यादावव्याप्तिः, संयोगेन वस्तुमात्राभावस्यैव प्रतियोग्यधिकरणवृत्तितया प्रतियोग्यधिकरणावृत्तितादृशाभावस्यैवाप्रसिद्धेः, प्रतियोग्यधिकरणवृत्तित्वस्य व्याप्यवृत्तित्वादत आह प्रतियोगितेति। स्वविशिष्टसम्बन्धिनिष्ठाभावी-

प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकविशिष्टप्रतियोग्यसम्बन्धित्वं स्वविशिष्टसम्बन्धिनो विशेषणं देयमिति तु फलितार्थः । तेनाभावमात्रस्यैव यथाकथञ्चित्कालिकादिसम्बन्धेन प्रतियोगिनः सम्बन्धिनि वृत्तावपि न क्षतिः । न वा हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतविशिष्टसत्तात्वादेः सत्तात्वाद्यवच्छिन्नसम्बन्धिनिष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वेऽपि सत्तावान् जातेरित्यादावव्याप्तिः । तादृशाभावप्रतियोगित्वन्तु साध्ये-

---

येत्यादिः । फलितार्थ इति । तथा च प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नाऽसम्बन्धि स्वविशिष्टसम्बन्धिनिष्ठाभावीयप्रतियोगितानवच्छेदकहेतुमन्निष्ठाभावप्रतियोगितावच्छेदककं यत् स्वं तदेव पारिभाषिकावच्छेदकमिति तु परमार्थ इति भावः ।

प्रतियोगितावच्छेदकसम्बन्धनिवेशप्रयोजनमाह **तेनेति** । प्रतियोगितावच्छेदकसम्बन्धेन तादृशप्रतियोगिसम्बन्धित्वप्रवेशेनेत्यर्थः । प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धित्वस्य स्वविशिष्टसम्बन्धिन्यविशेषणत्वे केवलसम्बन्धसामान्ये प्रतियोगिसम्बन्धित्वविवक्षणे वह्निमान् धूमादित्यादौ अव्याप्तिः, संयोगेन घटत्वविशिष्टसम्बन्धिनि भूतलादौ संयोगेन पटाद्यभावप्रतियोगिनः पटस्य कालिकेन सम्बन्धितायाः सत्त्वेन स्वविशिष्टसम्बन्धिनिष्ठप्रतियोगिव्यधिकरणाऽभावाऽप्रसिद्धेरित्याद्याभावमात्रस्यैवेति । यत्किञ्चित्सम्बन्धेन प्रतियोग्यसम्बन्धित्वस्य स्वविशिष्टसम्बन्धिनि वर्त्तमानतया अव्याप्त्यसम्भवात् सम्बन्धसामान्येन प्रतियोगिसम्बन्धित्वविवक्षयैवाव्याप्तिः सम्भवतीति सूचयितुं यथाकथञ्चिदित्युक्तमिति ध्येयम् । न क्षतिः = नाव्याप्तिः । नत्वसम्भवः, समवायादिना वस्तुमात्रस्य व्याप्यवृत्तितया तेन सम्बन्धेन साध्यतायां सद्धेतौ लक्षणसमन्वयसम्भवात् । प्रतियोगित्वाश्रयस्यासम्बन्धित्वानिवेशे दोषमाह **नवेति** । अव्याप्तिरिति परेणान्वयः । **प्रतियोगीति** प्रतियोगित्वाश्रयासम्बन्धित्वघटितप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वेऽपीत्यर्थः । **अव्याप्तिरिति** । तथा च प्रतियोगित्वाश्रयासम्बन्धित्वस्य स्वविशिष्ट-

तावच्छेदकसम्बन्धावच्छिन्नं ग्राह्यम् । तेन न घटत्वादेरपि स्वविशिष्टसंबन्धिनिष्ठसमवायाद्यवच्छिन्नप्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदकत्वेऽपि वह्निमान् धूमादित्यादाववच्छेदकाप्रसिद्धिनिबन्धनो दोषः ।

---

सम्बन्धिनि विशेषणत्वे सत्तावान् जातेरित्यादावव्याप्तिः, जातिमद्गुणनिष्ठाभावप्रतियोगितावच्छेदकस्य गुणकर्मान्यत्वविशिष्टसत्तात्वस्य सत्तात्वविशिष्टसम्बन्धिनिष्ठप्रतियोगित्वाश्रयप्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदकत्वं न सम्भवति विशिष्टसत्ताभावप्रतियोगित्वाश्रयसत्तासम्बन्धित्वस्य सत्तात्वविशिष्टसम्बन्धिनि द्रव्ये गुणे कर्मणि च सत्त्वात्, किन्तु घटाद्यभाव एव तादृशद्रव्यादौ प्रतियोगित्वाश्रयप्रतियोगिव्यधिकरणस्तत्प्रतियोगितानवच्छेदकत्वस्य तादृशप्रतियोगितावच्छेदके विशिष्टसत्तात्वे सत्त्वेन यद्धर्मपदेन साध्यतावच्छेदकीभूतसत्तात्वस्य धर्त्तुं शक्यत्वात् । प्रतियोगितावच्छेदकावच्छिन्नासम्बन्धित्वविवक्षणे तु न तत्राऽव्याप्तिः विशिष्टसत्तात्वावच्छिन्नाऽसम्बन्धिसत्तात्वविशिष्टसम्बन्धिगुणादिनिष्ठाभावप्रतियोगितावच्छेदकत्वस्यैव तादृशप्रतियोगितावच्छेदके विशिष्टसत्तात्वे सत्त्वेन सत्तात्वस्य यद्धर्मपदेनोपादानाऽसम्भवात्, विशिष्टसत्तात्वस्य तथात्वेनोपादातुं शक्यत्वेऽपि वक्ष्यमाणरीत्या तदवच्छिन्नविशेष्यताभिन्नविशेष्यतावच्छेदकत्वस्य सत्तात्वेऽनपायादिति भावः ।

नन्वेवमपि वह्निमान् धूमादित्यादौ सर्वत्राऽसम्भवः धूमवन्निष्ठाभावप्रतियोगितावच्छेदकघटत्वादेः प्रतियोगितावच्छेदकसमवायादिसम्बन्धेन घटत्वावच्छिन्नाऽसम्बन्धिनि संयोगेन घटत्वविशिष्टस्य सम्बन्धिनि भूतलादौ वर्त्तमानस्य समवायाद्यवच्छिन्नघटाभावस्य प्रतियोगितावच्छेदकतया यद्धर्मपदेन कस्यापि धर्त्तुमशक्यत्वादित्यत आह **तादृशाभावेति** । स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगित्वन्त्वित्यर्थः । **तेन**=साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेन तादृशप्रतियोगित्वविवक्षणेन । **स्वविशिष्टेति** । घटत्वादिविशिष्टेत्यर्थकम् । **दोषः**=असम्भवः इत्यस्य **नेति** पूर्वेणाऽन्वयः । स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगित्वं यदि साध्यतावच्छेदकसम्बन्धावच्छिन्नं तदा नासम्भवः, संयोगेन घटत्वाद्यव-

वस्तुतः पूर्ववदिहापि साध्यतावच्छेदकसंबन्धेन निरुक्तप्रतियोग्यसम्बन्धित्वमेव स्वविशिष्टसम्बन्धिनो वक्तव्यम् । तेन वृत्त्यनियामकसम्बन्धेन साध्यतायां तादृशसम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धावपि नाऽव्याप्तिः ।

ननूक्तपारिभाषिकावच्छेदकत्वद्वयस्य प्रवेशे मूलोक्तप्रतियोगिव्यधिक-

---

च्छिन्नासम्बन्धिघटत्वविशिष्टसम्बन्धिभूतलादिनिष्ठसंयोगावच्छिन्नपटाद्यभावप्रतियोगितानवच्छेदकतायाः धूमादिमन्निष्ठाभावप्रतियोगितावच्छेदकघटत्वादौ सत्त्वेन घटत्वादेरेव पारिभाषिकावच्छेदकत्वसम्भवादिति हृदयम् ।

यदि च वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकतया स्वामित्वसम्बन्धेन धनसाध्यकचैत्रत्वहेतौ साध्यतावच्छेदकीभूतस्वामित्वसम्बन्धावच्छिन्नप्रतियोगिताकाभावाऽप्रसिद्ध्याऽव्याप्तिस्तदाऽऽह वस्तुत इति । पूर्ववत् = पूर्वलक्षणवत् । इहापि = एतल्लक्षणेऽपि । साध्यतेति । तथा च स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगित्वं यत्किञ्चित्सम्बन्धावच्छिन्नमेव सम्बन्धसामान्यावच्छिन्नमेव वा वक्तव्यम्, स्वविशिष्टसम्बन्धिनि तु साध्यतावच्छेदकसम्बन्धेनैव प्रतियोगितावच्छेदकावच्छिन्नासम्बन्धित्वं विशेषणीयम्, एवञ्च न पूर्वोक्तदोषावकाशः । घटत्वविशिष्टसम्बन्धिनि भूतलादौ साध्यतावच्छेदकसंयोगेन घटत्वावच्छिन्नाऽसम्बन्धित्वविरहेण समवायादिना घटाद्यभावस्य लक्षणाऽघटकत्वात् घटत्वादेरेव पारिभाषिकाऽवच्छेदकत्वप्रसिद्धिसम्भवात् । धनी चैत्रत्वादित्यादावपि घटस्वामिनि स्वामित्वसम्बन्धेन घटत्वावच्छिन्नासम्बन्धित्वविरहेण स्वामित्वातिरिक्तसम्बन्धेन घटाभावस्य लक्षणाघटकत्वात् घटत्वादिकमेव पारिभाषिकाऽवच्छेदकमिति तत्रापि नाऽव्याप्तिरिति भावः ।

शंकते नन्विति । उक्तस्य = साध्यतावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नासम्बन्धिस्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकसम्बन्धावच्छिन्नस्वप्रतियोगितावच्छेदकावच्छिन्नासम्बन्धिहेतुसम्बन्धिवृत्त्यभावीयप्रतियोगितावच्छेदकत्वरूपस्य । मूलोक्तेति । यत्समानाधिकरणप्रतियोग्य-

रणस्य प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणार्थकत्वं विफलम्,
हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकस्य द्रव्यत्वत्वादेर्विशिष्टसत्तात्वाद्यवच्छि-
न्नवन्निष्ठाभावप्रतियोगितानवच्छेदकत्वादेव विशिष्टसत्तावान् जातेरित्यादा-

समानाधिकरणेत्यादिमूललक्षणघटकीभूतस्य प्रतियोगिव्यधिकरण-
पदस्येत्यर्थः । **प्रतियोगितेति** । हेत्वधिकरणविशेषणप्रतियोगिता-
वच्छेदकावच्छिन्नानधिकरणत्वावच्छिन्नार्थकत्वमित्यर्थः । **विफलमिति** ।
तथा च साध्यतावच्छेदकसम्बन्धेन स्वप्रतियोगित्वाश्रयानधिकरणहेत्वधि-
करणवृत्त्यभावीयप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसम्बन्धिनिष्ठप्रतियो-
गितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकं -
तस्यैव पारिभाषिकावच्छेदकत्वं वक्तव्यमिति भावः । प्रतियोगिताव-
च्छेदकावच्छिन्नप्रतियोगिव्यधिकरणार्थकत्वस्य वैफल्ये हेतुमाह
**हेतुमन्निष्ठेति** । मूलोक्तलक्षणे प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगि-
वैयधिकरण्याप्रवेशे विशिष्टसत्तावान् जातेरित्यत्रातिव्याप्तिः, विशिष्टस-
त्ताभावप्रतियोगित्वावच्छिन्नसत्तानधिकरणत्वस्य हेत्वधिकरणे गुणादा-
वसत्त्वेन साध्याभावस्य लक्षणाघटकत्वात् । निरुक्तपारिभाषिकावच्छेदक-
त्वस्य प्रवेशे तु नोक्तातिव्याप्तिः सम्भवति, निरुक्तसाध्याभावस्य लक्षणा-
घटकत्वेऽपि द्रव्यत्वाभावीयप्रतियोगित्वावच्छिन्नद्रव्यत्वानधिकरण-
गुणादिवृत्त्यभावीयप्रतियोगितावच्छेदकद्रव्यत्वत्वस्य विशिष्टसत्त्वात्वविः
शिष्टसम्बन्धिद्रव्यनिष्ठयथोक्तप्रतियोगिव्यधिकरणघटाद्यभावप्रतियोगिता-
नवच्छेदकतया साध्यतावच्छेदकीभूतविशिष्टसत्तात्वस्यैव पारिभाषिका-
वच्छेदकत्वसम्भवादिति तु समुदितग्रन्थतात्पर्यम् ।

नन्वेवं वह्निमान् धूमादित्यादौ सर्वत्राऽसम्भवः संयोगघटितसामा-
नाधिकरण्यसम्बन्धेन घटविशिष्टवाच्यत्वाभावस्य संयोगेन घटाभावस-
मनियततया घटाभावरूपत्वात् तदीयप्रतियोगित्वस्य वाच्यत्वेऽपि सत्त्वेन
तादृशप्रतियोगित्वावच्छिन्नवाच्यत्वानधिकरणत्वस्य कुत्राप्यप्रसिद्धत्वात्
प्रतियोगित्वाश्रयप्रतियोगिव्यधिकरणाभावस्यैवाऽप्रसिद्धेः, प्रतियोगिता-
वच्छेदकावच्छिन्नानधिकरणत्वनिवेशे तु नोक्तासम्भवः सम्भवति,
घटवैशिष्ट्यवाच्यत्वत्वावच्छिन्नानधिकरणत्वस्य धूमादिमति पर्वतादौ
सत्त्वेन संयोगेन घटाभावादेरेव लक्षणघटकत्वादिति तटस्थः शङ्कते न

वतिव्याप्त्यभावात् । न च संयोगेन घटाद्यभावस्यैव तत्समनियतघटविशिष्टवाच्यत्वाद्यभावत्वात् तत्प्रतियोगित्वावच्छिन्नस्य च वाच्यत्वस्य सर्वत्र सत्त्वात् प्रतियोगिव्यधिकरणाभावस्यैवाप्रसिद्धिः स्यात्, यदि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यप्रवेशो न स्यादिति वाच्यम् ? यत्प्रतियोगित्वावच्छिन्नस्यानधिकरणं हेत्वधिकरणं तत्प्रतियोगितावच्छेदकीभूतधर्मो यद्विशिष्टसम्बन्धिनिष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकस्तत्पारिभाषिकावच्छेदकमित्यस्य निर्दोषत्वात् । घटाभावस्य घटविशिष्टवाच्यत्वाभावस्वरूपत्वेऽपि तस्य घटत्वावच्छिन्नं यत्प्रतियोगित्वं तदाश्रयव्यधिकरणत्वस्य सुलभत्वादिति ।

न च तत्रावच्छेदकभेदेऽपि प्रतियोगितैक्यं युक्तम्, घटपटाद्यभावा-

---

चेति, वाच्यमिति परेणान्वयः । तत्समनियतेति । घटाभावव्याप्यघटाभावव्यापकीभूतघटविशिष्टवाच्यत्वाद्यभावस्वरूपत्वादित्यर्थः । वाच्यत्वादीत्यत्र आदिना प्रमेयपरिग्रहः । तेन वह्निमान् धूमादित्यादौ साध्यतावच्छेदकसंयोगेन वाच्यत्वाधिकरणत्वस्याप्रसिद्धावपि न क्षतिः, प्रमेयरूपप्रतियोगिनः संयोगेनाधिकरणतायाः पर्वतादौ सत्त्वेनैवासम्भवसङ्गतेरिति ध्येयम् । तत्प्रतियोगित्वावच्छिन्नस्य = घटाभावप्रतियोगित्वावच्छिन्नस्य । प्रतियोगीति । प्रतियोगित्वाश्रयेत्यादिः । समनियताभावयोरैक्येऽपि अवच्छेदकभेदेन प्रतियोगिताया भिन्नतया यत्प्रतियोगित्वावच्छिन्नानधिकरणत्वं हेतुमतस्तत्प्रतियोगितावच्छेदकधर्मो यद्धर्मविशिष्टसम्बन्धिनिष्ठप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकः स धर्मः पारिभाषिकावच्छेदक इत्यस्य विवक्षितत्वान्नासम्भवः, घटनिष्ठप्रतियोगित्वावच्छिन्नानधिकरणताया एव हेतुमति पर्वतादौ सत्त्वात् यत्प्रतियोगितापदेन तस्या एव धर्त्तव्यत्वेन प्रतियोगिव्यधिकरणाभावस्याप्रसिद्ध्यसम्भवात् इति समाधत्ते यत्प्रतियोगितेति । यद्धर्मावच्छिन्नप्रतियोगित्वावच्छिन्नस्येत्यर्थः । न चेति युक्तमिति परेणाऽन्वयः । कथन्तानिवृत्त्यर्थमाह घटपटेति । एकप्रतियोगितापत्तेरिति ।

नामप्येकप्रतियोगिताकत्वापत्तेरिति चेत्, अत्र प्राञ्चः, यत्प्रतियोगिताश्रयानधिकरणं हेत्वधिकरणं तत्प्रतियोगितावच्छेदकेत्याद्यभिधाने वह्निमान् धूमादित्यत्राव्याप्तिः, स्वरूपसम्बन्धात्मिकायाः प्रतियोगितायाः प्रतिव्यक्ति भिन्नत्वात्। 'वह्नित्वावच्छिन्नाभावीयं महानसीयवह्निनिष्ठं यत्प्रतियोगित्वं तदवच्छिन्नानधिकरणहेतुमत्पर्वतादिनिष्ठवह्निसामान्याभावप्रतियोगितावच्छे-

---

घटाभावप्रतियोगित्वं यदि पटाभावनिरूपितं स्यात् तदा पटाधिकरणावृत्त्यभावनिरूपितमपि स्यादित्यापत्तौ तात्पर्य्यमिति भावः।

मौलं प्रतियोगिवैयधिकरण्यं यदि स्वप्रतियोगित्वाश्रयानधिकरणहेत्वधिकरणवृत्तित्वरूपं तदा वह्निमान् धूमादित्यादावव्याप्तिः, वह्निसामान्याभावप्रतियोगित्वाश्रयमहानसीयवह्नेरनधिकरणपर्वतवृत्तिनिरुक्तवह्नय - भावप्रतियोगितावच्छेदकवह्नित्वस्य वह्नित्वविशिष्टसम्बन्धिपर्वतादिनिष्ठप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वात् वह्नित्वविशिष्टसम्बन्धिनि वह्नित्वरूपवह्नयभावप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वाऽसत्त्वेन घटाद्यभावस्यैव वह्नित्वविशिष्टसम्बन्धिनिष्ठतादृशप्रतियोगिव्यधिकरणाभावत्वादिति साध्यतावच्छेदकीभूतवह्नित्वस्य यद्धर्मपदेनोपादानसम्भवात्। मूलोक्तप्रतियोगिव्यधिकरणपदस्य प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणार्थकत्वे तु न तत्राव्याप्तिः वह्नयभावप्रतियोगितावच्छेदकवह्नित्वावच्छिन्नानधिकरणत्वस्य पर्वतादावसत्त्वेन वह्नयभावस्य लक्षणाघटकत्वादित्येवमुक्तपूर्वपक्षे प्राचीनसमाधानमाह प्राञ्च इति। वह्नयभावीयप्रतियोगिताश्रयत्वस्य महानसीयवह्नौ सत्त्वमुपपादयति स्वरूपसम्बन्धेति। यतः स्वरूपसम्ब-

---

## * अथ द्वितीयलक्षणम् *

ननु प्राञ्च इति-प्रतियोगिभेदे प्रतियोगिताया भिन्नत्वमते मूलोक्तप्रतियोगिवैयधिकरण्यस्य प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यार्थकत्वस्य वैफल्यमिव स्वविशिष्टेत्यादिपारिभाषिकावच्छेदकत्वलक्षणघटकीभूतप्रतियोगिवैयधिकरण्यस्यापि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यार्थकत्वं विफलमिति चेन्न १ वह्निमन्निष्ठाभावप्रतियोगितावच्छेदकधूमत्वादेः धूमत्वविशिष्टसम्बन्धिनिष्ठप्रतियोगि-

दकीभूतवह्नित्वादेः स्वविशिष्टसम्बन्धिनिष्ठनिरुक्तप्रतियोगिव्यधिकरणाभाव-प्रतियोगितानवच्छेदकत्वात् । प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैय-धिकरण्यप्रवेशे तु तादृशप्रतियोगिताया अवच्छेदकं यद्वह्नित्वादिकं तदव-च्छिन्नानधिकरणत्वं न हेतुमतः पर्वतादेरित्यदोष इत्याहुः ।

परे तु प्रतियोगिभेदेऽप्येकधर्मावच्छिन्नप्रतियोगिता लाघवादेकैवेति मते वह्निमान् धूमादित्यादौ नाव्याप्तिः । परन्तु तद्रूपान्यत्वविशिष्टसत्तावान् रूपत्वादित्यादावतिव्याप्तिरेव स्याद्यदि प्रतियोगितावच्छेदकावच्छिन्न-

---

न्धात्मिका प्रतियोगिता अत एव प्रतिव्यक्ति भिन्नेति पर्यवसितार्थः । **स्वविशिष्टेति** । वह्नित्वविशिष्टसम्बन्धिनिष्ठप्रतियोगितावच्छेदकावच्छि-न्नप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वादित्यर्थः । मौलं प्रतियोगिवैयधिकरण्यं यदि प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यरूपं तदा नाव्याप्तिरित्याह **प्रतियोगितेति** । **तदवच्छिन्नेति** । वह्नित्वावच्छि-न्नार्थकम् । इत्यदोषः = इति न वह्निमान् धूमादित्यत्राऽव्याप्तिः ।

यद्यपि वह्नित्वरूपैकधर्मावच्छिन्नप्रतियोगित्वमेकमेव नतु नाना तदो वह्निसामान्याभावीयप्रतियोगित्वाश्रयीभूतवह्निमात्रस्यानधिकरण-तायाः पर्वतादौ विरहात् वह्न्यभावस्य तादृशप्रतियोगिव्यधिकरणहेतुसमा-नाधिकरणाभावत्वेन धर्त्तुमशक्यत्वात् वह्निमान् धूमादित्यादावव्याप्त्य-सम्भवेन पूर्वोक्तप्राचीनसमाधानं न युक्तमिति मतान्तरेण पूर्वोक्तपूर्वप-क्षस्य समाधानान्तरमाह **परेत्विति** । प्रतियोगिभेदेऽपि = वह्न्यभावीय-प्रतियोगिनां वह्न्यादीनां भेदेऽपि । **नाव्याप्तिरिति** । वह्न्यभावीयप्रति-योगिताया विह्निमात्रे सत्त्वादिति भावः । **रूपत्वादिति** । अत्र तद्रूपान्तर्भावे व्यभिचारो बोध्यः । कथन्तानिवृत्त्यर्थमाह **यदीति** ।

---

स्वाश्रयप्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदकतया धूमत्वस्य पारिभाषिकान-वच्छेदकत्वात् धूमवान् वह्नेरित्यत्रातिव्याप्तिवारणार्थे स्वविशिष्टेत्यादिलक्षणे प्रतियो-गिवैयधिकरण्यस्य प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यार्थकत्वध्रौव्ये वह्निमान् धूमादित्यत्राव्याप्तिवारणायैव मूलेऽपि तस्य तादृशार्थकताया आवश्यकत्वात् ।

प्रतियोगिव्यधिकरणाभावो मौलो न स्यात् । प्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकस्य घटत्वादेः सर्वस्यैव तद्रूपान्यत्वविशिष्टसत्तात्वावच्छिन्नसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वेन तादृशसत्तात्वस्य पारिभाषिकानवच्छेदकत्वादिति प्राहुः । [ तच्चिन्त्यम् ]

---

अतिव्याप्तिं सङ्गमयति प्रतियोग्यनधिकरणेति । प्रतियोगित्वाश्रयानधिकरणार्थकम् । तादृशसत्तात्वस्य = तद्रूपान्यत्वविशिष्टसत्तात्वस्य । स्वपदेन तद्रूपान्यत्वविशिष्टसत्तात्वस्योपादानासम्भवादिति भावः । पारिभाषिकानवच्छेदकत्वादिति । यत्प्रतियोगित्वावच्छिन्नानधिकरणं हेत्वधिकरणं तत्प्रतियोगितावच्छेदकधर्मो यद्धर्मविशिष्टसम्बन्धिनिष्ठप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकः स धर्मः पारिभाषिकावच्छेदक इत्युक्तौ तद्रूपान्यत्वविशिष्टसत्तावान् रूपत्वादित्यत्रातिव्याप्तिः, तद्रूपान्यत्वविशिष्टसत्ताभावप्रतियोगित्वाश्रयसत्ताधिकरणतया हेतुमति रूपमात्रे सत्त्वेन तादृशसत्ताभावस्य लक्षणाघटकतया तादृशप्रतियोग्यनधिकरणहेत्वधिकरणरूपादिनिष्ठघटाद्यभावप्रतियोगितावच्छेदकघटत्वादेः तद्रूपान्यत्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वेन यद्धर्मपदेन तद्रूपान्यत्वविशिष्टसत्तात्वस्योपादानासम्भवात् घटत्वादेस्तथात्वेनोपादानेऽपि तादृशघटत्वादिभिन्नत्वस्य साध्यतावच्छेदके तादृशसत्तात्वे सत्त्वादित्याशयः ।

प्रकर्षसूचनाय प्राहुरित्युक्तम् । न च तद्रूपभेदाभावस्यापि हेतुमन्निष्ठतया तत्प्रतियोगितावच्छेदकतद्रूपभेदत्वस्य तद्रूपान्यत्वविशिष्टसत्तात्वविशिष्टसम्बन्धिनिष्ठतादृशाभावप्रतियोगितानवच्छेदकत्वात् यद्धर्मपदेन तादृशसत्तात्वस्यैव धर्तुं शक्यतया कुतोऽतिव्याप्तिरिति वाच्यम् ? तद्रूपभेदस्य साध्यतावच्छेदकसमवायसम्बन्धेनाधिकरणत्वस्य तादृशभेदाभावीयप्रतियोगित्वाश्रयभेदानधिकरणत्वस्य चाप्रसिद्ध्या तद्रूपभेदाभावस्यापि लक्षणाघटकत्वात् । यद्यपि साध्यतावच्छेदकसम्बन्धसामान्ये पूर्वोक्तोभयाभावघटितप्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदकत्वस्य तद्रूपभेदत्वे तद्रूपत्वात्मकतद्व्यक्तित्वे वा सम्भवात् कुतोऽतिव्याप्तिरित्यु-

---

अथ प्रतियोगिभेदेऽपि प्रतियोगिताया ऐक्यमते स्वविशिष्टेत्यादिलक्षणे प्रतियोगिवैयधिकरण्यस्य प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यार्थकत्व-

इदं त्ववधातव्यम् । अत्रापि लक्षणे हेतुमन्निष्ठाभावप्रतियोगिता-वच्छेदकं यद्यत्सम्बन्धेन यादृशयादृशधर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियो-

च्यते, तथापि साध्यतावच्छेदकसम्बन्धेन यत्प्रतियोगित्वाश्रयानधिकरणं हेत्वधिकरणं तत्प्रतियोगितावच्छेदकस्य स्वविशिष्टसम्बन्धिनिष्ठाभावप्रति-योगितानवच्छेदकत्वमभिप्रेत्यैवातिव्याप्तिरभिहितेति ध्येयमिति दिक् ।

ननूक्तलक्षणेऽपि स्वविशिष्टसम्बन्धिनिष्ठाभावेत्यत्र स्ववैशिष्ट्यं यदि सम्बन्धसामान्येन विवक्ष्यते तदा वह्निमान् धूमादित्यादौ असम्भवः हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकघटत्वादेः कालिकेन घटत्व-विशिष्टवह्न्यादिसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकतया कस्यापि पारि-भाषिकावच्छेदकत्वाप्रसिद्धेः । यदि च साध्यतावच्छेदकताघटकसम्बन्धेन यद्धर्मवैशिष्ट्यमुच्यते तदा पुरुषानुयोगिकसंयोगसम्बन्धेन दण्डविशि-ष्टस्य दण्डिनः कालिकेन साध्यतायां महाकालत्वहेतावव्याप्तिः, हेतुमन्नि-ष्ठाभावप्रतियोगितावच्छेदकगगनत्वादेः तादृशसंयोगसम्बन्धेन वैशिष्ट्य-स्याप्रसिद्धत्वात् । प्रतियोगितावच्छेदकताघटकसम्बन्धेन तथात्वाभिधाने धूमत्वप्रकारकप्रमाविशेष्यवान् वह्नेरित्यत्रातिव्याप्तिः पूर्वोक्तयुक्त्या साध्या-भावप्रतियोगितावच्छेदकताया धूमत्व एव कल्पनीयतया तादृशप्रतियोगि-तावच्छेदकताघटकसमवायसम्बन्धेन धूमत्वप्रकारकप्रमाविशेष्यत्ववैशि-ष्ट्याप्रसिद्ध्या धूमत्वस्यैव यद्धर्मपदेन धर्त्तुमशक्यत्वात् । साध्यत्वप्रतियोगि-त्वयोरन्यतरावच्छेदकताघटकसम्बन्धेन यद्धर्मवैशिष्ट्यविवक्षणे तादात्म्येन धूमविशिष्टस्य संयोगेन साध्यतायां द्रव्यत्वहेतावतिव्याप्तिः, लाघवात्, धूमत्वस्यैव हेतुमन्निष्ठसाध्याभावप्रतियोगितावच्छेदकतया तस्य तादृशा-न्यतरप्रतियोगितावच्छेदकताघटकसमवायसम्बन्धेन धूमविशिष्टधूमीय-परमाणुनिष्ठाभावप्रतियोगितावच्छेदकत्वात् साध्यतावच्छेदकीभूतधूमस्य यद्धर्मपदेन धर्त्तुमशक्यत्वादित्यत आह इदन्त्ववधातव्यमिति । अत्रापि लक्षणे = द्वितीयपारिभाषिकावच्छेदकत्वलक्षणे । हेतुमन्निष्ठेति । प्रति-योगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगिता-

स्यापि वैफल्यं सम्भवतीति तदनभिधानमनुचितमिति चेन्न । तद्रूपान्यत्वविशिष्ट-सत्तावान् रूपत्वादित्यत्रातिव्याप्तिवारणार्थं मूलोक्तस्य तस्य तादृशार्थकताया आवश्य-

गितानवच्छेदकं तत्तत्सम्बन्धेन तादृशतादृशधर्मावच्छिन्नविशेष्यतान्यसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नविशेष्यतावच्छेदकत्वमेव साध्यतावच्छेदके द्रष्टव्यम्, नातः प्रागुक्तदोषाणामवकाशः, न वा महानसीय-

---

वच्छेदको यो धर्म इत्यर्थः। धूमवान् वह्नेरित्यादौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकधूमत्वस्य महानसीयवह्नित्वविशिष्टसम्बन्धिनिष्ठसंयोगावच्छिन्नप्रतियोगितानवच्छेदकतयाऽतिव्याप्तिरतो यादृशयादृशेतिवीप्सादरः। तेन तावद्धर्मान्तर्गतधूमत्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वस्यापि धूमत्वे सत्त्वात् न तत्रातिव्याप्तिः। वस्तुतः यद् यद् धर्मविशिष्टेत्युक्तावेव निरुक्तदोषवारणसम्भवे यादृशयादृशेत्यभिधानमसङ्गतमिति ध्येयम्।

द्रष्टव्यमिति। तथा च प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावीयप्रतियोगितावच्छेदकं यद्यत्सम्बन्धेन यद्यद्धर्मविशिष्टस्य साध्यतावच्छेदकसम्बन्धेन यः सम्बन्धी तन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकं तत्तत्सम्बन्धावच्छिन्नतत्तद्धर्मनिष्ठावच्छेदकताकविशेष्यताभिन्ना या साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकविशेष्यता तदवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्येवं रीत्या लक्षणार्थो निर्वचनीयः इति भावः। प्रागुक्तदोषाणां =पूर्वोक्तासम्भवादीनाम्।

ननु तादृशाभावप्रतियोगितावच्छेदकं यद्यत्सम्बन्धेन यादृशयादृशधर्मविशिष्टस्य सम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकं तादृशतादृशधर्मभिन्नत्वमेव साध्यतावच्छेदके विवक्षणीयम् किं तादृशतादृशधर्मावच्छिन्नविशेष्यताभेदस्य साध्यतावच्छेदकावच्छिन्नविशेष्यतायां विवक्षणेनेत्यत आह- न वेति। तथाचोक्तविवक्षायां वह्निमान् धूमादित्यादावव्याप्तिः हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकस्य महानसीयवह्नित्वादेः महानसीयतेजस्त्वादेर्वा महानसीयवह्नित्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकतया तादृशमहानसीयवह्नित्वभिन्नत्वस्य वह्नि-

---

कत्वे निरुक्तलक्षणेऽपि सत्तावान् जातेरित्यत्राव्याप्तिवारणाय तस्य तथात्वस्यावश्यकत्वात्।

वह्नित्वादेः पारिभाषिकावच्छेदकतया तदन्यत्वस्य वह्नित्वादावसत्त्वेऽपि वह्निमान् धूमादित्यादावव्याप्तिः, विशिष्टवह्नित्वाभिन्नस्यापि वह्नित्वस्य विशिष्टवह्नित्वावच्छिन्नविशेष्यतान्यविशेष्यतावच्छेदकत्वानपायात् ।

---

स्वरूपसाध्यतावच्छेदके विरहात् । तादृशविशेष्यताभेदनिवेशे तु न तत्राव्याप्तिः महानसीयवह्नित्वावच्छिन्नविशेष्यताभिन्नत्वस्य वह्नित्वावच्छिन्नविशेष्यतायां सत्त्वादित्याह **महानसीयवह्नित्वादेरिति** । आदिना महानसीयतेजस्त्वादिपरिग्रहः । तेन महानसीयवह्न्यभावस्य साध्यतावच्छेदकतदितरोभयानवच्छिन्नप्रतियोगिताकत्वविरहेण तस्य मूलोक्तलक्षणाघटकत्वेऽपि न क्षतिरिति ध्येयम् । **पारिभाषिकेति** । स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकहेतुमन्निष्ठाभावप्रतियोगितावच्छेदककतयेत्यर्थः । तदन्यत्वस्य = महानसीयवह्नित्वभिन्नत्वस्य । **विशिष्टेति** । महानसीयत्वविशिष्टवह्नित्वाभिन्नस्यापीत्यर्थः । **विशिष्टेति** । महानसीयवह्नित्वावच्छिन्नविशेष्यताभिन्नविशेष्यतावच्छेदकत्वानपायादित्यर्थः ।

घटवान् महाकालत्वादित्यत्र हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकगगनत्वादेः पटत्वादिविशिष्टस्य कालिकेन सम्बन्धिनि महाकालादिनिष्ठाभावप्रतियोगितावच्छेदकतया पटत्वादेः पारिभाषिकावच्छेदकत्वस्य वक्तुमशक्यत्वात् गगनत्वादिविशिष्टस्य च कालिकेन सम्बन्ध्यप्रसिद्ध्या यद्धर्मपदेनोपादानासम्भवात् कस्यापि पारिभाषिकावच्छेदकत्वासम्भ-

---

अथवा विषयितासम्बन्धेन नित्यवृत्तित्वविशिष्टघटस्य साध्यतायां ज्ञानत्वहेतावतिव्याप्तिः स्यात् यदि निरुक्तलक्षणघटकप्रतियोगिवैयधिकरण्यस्य प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यार्थकत्वं न स्यात् । साध्यतावच्छेदकविशिष्टसम्बन्धिनि नित्यज्ञाने विषयितया प्रतियोगित्वाश्रयप्रतियोगिव्यधिकरणाभावाऽप्रसिद्धेः यद्धर्मपदेन साध्यतावच्छेदकस्य धर्तुमशक्यत्वात्, केवलघटत्वादेर्धर्तुं शक्यत्वेऽपि तदन्यत्वस्य साध्यतावच्छेदके सत्त्वात् । तन्निवेशे तु न तत्रातिव्याप्तिः तादृशनित्यज्ञाने नित्यज्ञानान्यत्वविशिष्टघटाभावस्य लक्षणघटकत्वसम्भवात् । न च विषयितया घटस्य साध्यतायां नित्यज्ञानत्वहेतावव्याप्तिः निरुक्तप्रतियोगिव्यधिकरणाभावाप्रसिद्धेरिति वाच्यम् ? तादृशसाध्यकहेतोर्व्याप्यवृत्तिसाध्यकत्वेन तत्र प्रतियोगिव्यधिकरणत्वानिवेशात् । नचैवं निरुक्तव्यभिचारिणोऽपि व्याप्यवृत्तिसाध्यकतया तत्रापि नाति-

ननु घटवान् महाकालत्वादित्यादावव्याप्तिः; गगनत्वादिविशिष्टस्य कालिकादिसम्बन्धेन सम्बन्ध्यप्रसिद्धया पारिभाषिकावच्छेदकत्वासम्भवात् । न च साध्यतावच्छेदकसम्बन्धसामान्ये यादृशधर्मावच्छिन्नाभाववदनुयोगिकत्व-यद्धर्मविशिष्टप्रतियोगिकत्वोभयाभावस्तत्त्वं विवक्षितम्, तच्च गगनत्वादौ सुलभमिति वाच्यम् ? तथासति प्रमेयधूमवान् वह्नेरित्यादावतिव्याप्तेरित्युक्तत्वात् । धूमत्वविशिष्टप्रतियोगिकत्वघटिततादृशोभयत्वापेक्षया प्रमेयधूमत्वविशिष्टप्रतियोगिकत्वघटिततादृशोभयत्वस्य गुरुत्वेन तदवच्छिन्नप्रतियोगित्वाप्रसिद्धेरिति चेत ?

---

वेनाव्याप्तिरित्याशंकते नन्विति । अव्याप्तिमुपपादयति गगनत्वविशिष्टस्येति । पारिभाषिकावच्छेदकत्वेनाभिमतस्येत्यादिः । कालिकसम्बन्धेनेति । साध्यतावच्छेदकेत्यादिः । पूर्वोक्तरीत्या निरुक्तामव्याप्तिं वारयितुं तटस्थः शंकते न चेति । वाच्यमिति परेणान्वयः । तादृशेति हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकावच्छिन्नाभाववदनुयोगिकत्व यद्धर्मावच्छिन्नप्रतियोगिकत्वोभयाभाव इत्यर्थः । तत्त्वं = तद्धर्मत्वम् । सुलभमिति । तथा च घटवान् महाकालत्वादित्यादौ साध्यतावच्छेदककालिकसम्बन्धसामान्ये तादृशगगनत्वावच्छिन्नाभाववन्महाकालानुयोगिकत्वसत्त्वेऽपि गगनत्वावच्छिन्नप्रतियोगिकत्वविरहात् यद्धर्मपदेन गगनत्वस्योपादातुं शक्यतया तस्यैव पारिभाषिकावच्छेदकत्वस्य सुलभत्वान्न तत्राऽव्याप्तिरिति भावः ।

---

व्याप्तिरिति वाच्यम् ? व्यभिचारिणां सर्वलक्षणस्यालक्ष्यत्वात् तत्रातिव्याप्तेरावश्यकत्वादिति ध्येयम् ।

निरुक्तलक्षणानुगमस्तु हेत्वधिकरणवृत्तिप्रतियोगिताविशिष्टो धर्मः पारिभाषिकावच्छेदक इति । प्रतियोगितावैशिष्ट्यं स्वावच्छेदकवृत्तित्वसम्बन्धेन, वृत्तित्वञ्च स्वविशिष्टसम्बन्धिनिष्ठनिरुक्ताभावीयप्रतियोगितावच्छेदकवृत्त्युभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकूटत्वावच्छिन्नवत्त्वसम्बन्धेन । हेत्वधिकरणवृत्तित्वं प्रतियोगितायां स्वावच्छेदकावच्छिन्नसाध्यतावच्छेदकसम्बन्धा-

अत्र वदन्ति । स्वविशिष्टप्रतियोगिकत्वानि विशिष्योपादाय साध्यतावच्छेदकसंबन्धसामान्ये हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकीभूततत्तद्धर्मावच्छिन्नाभाववदनुयोगिकत्वस्य यद्धर्मविशिष्टप्रतियोगिकत्वव्यक्तीनां प्रत्येकस्य च द्वयोर्व्यतिरेकः स धर्मः पारिभाषिकावच्छेदकः । प्रमेय-

---

निरुक्तरीत्या पूर्ववदव्याप्तिवारणेऽपि पूर्ववदेव प्रमेयधूमवान् वह्नेरित्यादावतिव्याप्तिः, प्रमेयत्वावच्छिन्नप्रतियोगिकत्वतादृशधूमत्वावच्छिन्नाभाववदनुयोगिकत्वोभयत्वस्य धूमत्वावच्छिन्नप्रतियोगिकत्वघटितोभयत्वापेक्षया गुरुतया तदवच्छिन्नाभावाऽप्रसिद्ध्या प्रमेयधूमत्वस्य यद्धर्मपदेन धर्तुमशक्यत्वात् तादृशोभयनिष्ठप्रतियोगिताकाभावविवक्षणे निरुक्तातिव्याप्तिवारणेऽपि वह्निमान् धूमादित्यादौ सर्वत्रासम्भवः, वह्नित्वावच्छिन्नप्रतियोगिकत्वघटितोभयनिष्ठप्रतियोगिताकस्य तादृशोभयघटोभयाभावस्य साध्यतावच्छेदकसम्बन्धसामान्ये सत्त्वादित्युक्तत्वादित्याह **तथा सतीति ।** निरुक्तरीत्याव्याप्तिवारणे सतीत्यर्थः । **तदवच्छिन्नेति ।** प्रमेयधूमत्वावच्छिन्नार्थकम् ।

नन्वित्यादेरुत्तरमत्र वदन्तीति । केचिदिति शेषः । **स्वविशिष्टेति ।** पारिभाषिकावच्छेदकत्वेनाभिमतधर्मविशिष्टप्रतियोगिकत्वानीत्यर्थः । विशिष्योपादाय=एकैकं धृत्वा । द्वयोर्व्यतिरेकः=निरुक्तोभयोरभावः । **पारिभाषिकावच्छेदक इति ।** भवति हि वह्निमान् धूमादित्यादौ साध्यतावच्छेदकसंयोगसामान्य एव तादृशप्रतियोगितावच्छेदकघटत्वावच्छिन्नाभाववत्पर्वतानुयोगिकत्वसत्त्वेऽपि घटत्वावच्छिन्नप्रतियोगिकत्वव्यक्तीनां प्रत्येकस्याभावसत्त्वात्, यद्धर्मपदोपात्तघटत्वस्यैव पारिभाषिकावच्छेदकत्वं न तु वह्नित्वस्य तथात्वं, तादृशसंयोगे संयोगनिष्ठवह्नित्वावच्छिन्नप्रतियोगिकत्वव्यक्तेः सत्त्वादिति तत्र लक्षणसमन्वयः ।

प्रमेयधूमवान् वह्नेरित्यत्रातिव्याप्तिं वारयति **प्रमेयधूमत्वेति ।** **तत्तदिति ।** प्रमेयधूमत्वावच्छिन्नप्रतियोगिकत्वं यद् यत् तत्तत्प्रत्येकस्य

---

वच्छिन्नाधिकरणत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन ।

अत्र वदन्तीति । ननूक्तरीत्या तदवच्छिन्नेत्यादिपूर्वकल्पस्यापि परिष्कारसम्भवे

धूमत्वावच्छिन्नप्रतियोगिकत्वघटितोभयत्वस्य गुरुतया प्रतियोगितानवच्छेदकत्वेऽपि तत्तद्धर्मप्रतियोगिकत्वघटितोभयाभावकूटमादायैव नातिव्याप्तिः। कालो घटवान् महाकालत्वादित्यादौ च गगनत्वमेव तादृशावच्छेदकमादाय लक्षणसमन्वय इति।

---

धूमत्वावच्छिन्नाभाववदनुयोगिकत्वस्य चेत्येतद्द्वयनिष्ठप्रतियोगिताकाभावकूटाभावमादायैवेत्यर्थः। नातिव्याप्तिरिति। तथा च तादृशोभयाभावकूटनिवेशात् लाघवगौरवयोरकिञ्चित्करतया संयोगसामान्य एव तादृशोभयाभावसत्त्वात् प्रमेयधूमत्वस्यैव पारिभाषिकावच्छेदकत्वसम्भवान्नातिव्याप्तिरिति भावः। घटवान् महाकालत्वादित्यादावव्याप्तिं वारयति कालविति। तथा च साध्यतावच्छेदककालिकसम्बन्धसामान्ये हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकगगनत्वावच्छिन्नाभाववन्महाकालानुयोगिकत्वसत्त्वेऽपि तादात्म्यनिष्ठस्य गगनत्वावच्छिन्नप्रतियोगिकत्वस्य विरहात् यद्धर्मपदेन गगनत्वादेरेव धर्त्तुं शक्यत्वान्न कालो घटवान् महाकालत्वादित्यत्राव्याप्तिरिति हृदयम्।

साम्प्रदायिकास्तु हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं यद्धर्माश्रयनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकं स धर्मः पारिभाषिकावच्छेदक इत्युक्तौ घटवान् महाकालत्वादित्यत्र नाव्याप्तिः, गगनत्वाश्रयनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वस्य गगनत्वे सत्त्वेन गगनत्वस्यैव पारिभाषिकावच्छेदकत्वसम्भवात्। नचैवं वह्निमान् धूमादित्यत्राव्याप्तिः तादृशप्रतियोगितावच्छेदकस्य महानसीयवह्नित्वस्य वह्नित्ववन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वादिति वाच्यम्? वह्नित्ववति पर्वतीयवह्नौ महानसीयवह्निभेदसत्त्वेन अव्याप्तेरसम्भवात्।

न च तथापि द्रव्यं गगनत्वादित्यत्राव्याप्तिः घटवृत्तित्वविशिष्टद्रव्यत्वत्वस्य हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकस्य साध्यतावच्छेदकविशिष्टद्रव्यत्वनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वादिति वाच्यम्?

---

कल्पान्तरानुसरणं व्यर्थमिति चेन्न? एतादृशास्वरसेनैव वदन्तीत्यस्योक्तत्वात्। केचित्तु पूर्वकल्पे दीधितिकृतो न तादृशपरिष्कारे तात्पर्यम् किन्तु परकल्प एवेति पूर्वलक्षणं त्यक्तमित्यप्याहुः।

वस्तुतस्तु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदको यो धर्मः प्रतियोगिव्यधिकरणस्तदवच्छिन्नाभाववत्त्वावच्छेदेन साध्यताघटकसंबन्धावच्छिन्नसंबन्धितानिरूपितविशेषणतया यद्धर्मविशिष्टसम्बन्धित्वसामान्याभावस्तत्त्वे, यद्धर्मे हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकधर्मावच्छिन्नप्रतियोग्यनधिकरणवृत्त्यधिकरणतावच्छेदकत्वसामान्यस्य प्रकृतसाध्याधिकरणतावच्छेदकत्वनिरूपितस्वरूपसम्बन्धेनाऽभावस्तत्त्वे वा स्वविशिष्टसंबन्धीत्यादिनिरुक्तेस्तात्पर्याद् गगनत्वादौ सहजतः पारिभाषिकावच्छेदकत्वं सुलभमिति ध्येयम् ।

केचित्तु तादात्म्य-साध्यतावच्छेदकान्यतरसंबन्धेन यः स्वविशिष्ट-

---

अस्मन्मते हेतुसमानाधिकरणाभावप्रतियोगितायां साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वस्य निवेशनीयतया घटवृत्तित्वविशिष्टद्रव्यत्वाभावस्य मूलोक्तलक्षणाघटकत्वादित्याहुः । तन्न ? सामानाधिकरण्यसम्बन्धेन घटभेदविशिष्टद्रव्यत्वसाध्यकघटपटान्यतरत्वहेतावतिव्याप्त्यापत्तेः, साध्याभावप्रतियोगितावच्छेदकताया लाघवेन घटभेदत्व एव कल्पनीयतया तस्य च निरुक्तसाध्यीभूतद्रव्यत्वनिष्ठभेदप्रतियोगितावच्छेदकत्वेन साध्यतावच्छेदकस्य पारिभाषिकानवच्छेदकत्वात् । न च प्रतियोगित्वासमानाधिकरणधर्मस्य प्रतियोगितावच्छेदकत्वे मानाभावोऽन्यथा विशिष्टसत्ताभावप्रतियोगितावच्छेदकताया अपि द्रव्यत्वत्वे कल्पनापत्तिः स्यादिति घटभेदत्वस्य साध्याभावप्रतियोगितावच्छेदकत्वासम्भवान्नोक्तातिव्याप्तिरिति वाच्यम् ? तथा सत्यपि घटभेदविशिष्टप्रमेयस्य स्वरूपेण साध्यतायां घटपटान्यतरत्वहेतौ साध्याभावप्रतियोगितावच्छेदकघटभेदत्वस्य साध्यनिष्ठभेदप्रतियोगितावच्छेदकत्वादतिव्याप्तेर्दुर्वारत्वादिति तु विभावनीयमित्यास्तां विस्तरः ।

प्रकारान्तरेण घटवान् महाकालत्वादित्यत्राव्याप्तिं वारयतां केषाञ्चिन्मतं दूषयितुमुपन्यस्यति केचित्त्विति । तादात्म्येति । तादात्म्यावृत्ति

---

तादात्म्यसाध्यतेति । ननु तादात्म्यसम्बन्धेन साध्यस्थले तादात्म्यावृत्तित्वविशिष्टसाध्यतावच्छेदकासम्बन्धावृत्तित्वावच्छिन्नाभावनिवेशेऽपि अन्यतरत्वस्याप्रसिद्धिः, निरुक्तविशिष्टाभावप्रतियोगितावच्छेदकतायाः केवलतादात्म्यावृत्तित्व एव

सम्बन्धो तन्निष्ठो यस्तदन्यतरसम्बन्धेन प्रतियोगिव्यधिकरणोऽभावस्तत्प्रतियोगितानवच्छेदकतत्कत्वमुक्तलक्षणार्थः। तथा च तादृशान्यतरतादात्म्य-

---

यत् यच्च साध्यतावच्छेदकसंसर्गावृत्ति तच्छून्यत्वरूपान्यतरसम्बन्धेनेत्यर्थः। तेन तादात्म्यसम्बन्धेन साध्यस्थले भेदद्वयस्याप्रसिद्धया नान्यतरत्वस्याप्रसिद्धावपि क्षतिरित्यन्यत्र विस्तरः। स्वविशिष्टसम्बन्धी = पारिभाषिकावच्छेदकत्वेनाभिमतयद्धर्मविशिष्टस्य सम्बन्धी। तन्निष्ठो यः = तादृशसम्बन्धिनि वर्त्तमानो यः। तदन्येति। तादात्म्यसाध्यताघटकान्यतरसम्बन्धेनेत्यर्थः। तत्प्रतियोगितेति। तादृशप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकीभूतहेतुसन्निष्ठाभाव प्रतियोगितावच्छेदकत्वमित्यर्थः। उक्तलक्षणार्थ इति। तथा च तादात्म्यसाध्यतावच्छेदकान्यतरसम्बन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नाऽसम्बन्धी यस्तादृशान्यतरसम्बन्धेन स्वविशिष्टस्य सम्बन्धि तन्निष्ठाभावप्रतियोगितानवच्छेदकहेतुमन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदकं यद् यत् स्वं तावद्भेदकूटवत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितार्थः।

वह्निमान् धूमादित्यादौ नैतादृशं स्वं वह्नित्वं हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकघटत्वादौ तादात्म्यसाध्यताघटकान्यतरसम्बन्धेन वह्नित्वविशिष्टस्य सम्बन्धिनि वह्नौ पर्वतादौ च वर्त्तमानस्य तादृशान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणस्य घटाद्यभावस्य प्रतियोगितावच्छेदकतायाः एव सत्त्वात्, किन्तु घटत्वादिकमेव तथा, घटत्वादिविशिष्टस्य

---

कल्पनीयतया तादृशविशिष्टवृत्तित्वावच्छिन्नाभावाऽप्रसिद्धेरिति चेन्न ? तादात्म्यावृत्तित्वे सति साध्यतावच्छेदकसम्बन्धावृत्ति यद् यत् तत्तद्व्यक्त्यभावकूटवत्त्वस्य विवक्षितत्वात्। केचित्तु लक्ष्यभेदेन लक्षणस्य नानात्वात् तादात्म्यसम्बन्धेन साध्यस्थले तादृशान्यतरसम्बन्धो न निवेशनीय इत्याहुः।

अथ साध्यताघटकसम्बन्धमात्रेण स्वविशिष्टसम्बन्धित्वविवक्षणे कालो घटवान् महाकालत्वादित्यत्राव्याप्तिसम्भवेऽपि तादात्म्यमात्रेण स्वविशिष्टस्य सम्बन्धित्वनिवेशे न कोऽपि दोष इति तत्परित्यागोऽनुचित इति चेन्न ? समवायतादात्म्यान्यतरसम्बन्धेन वह्नेः साध्यत्वे वह्न्यवयवत्वहेतावव्याप्तेः, प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकवह्नित्वस्य साध्यतावच्छेदकवह्नित्वत्वविशिष्टस्य केवलतादात्म्येन

संबन्धेन गगनत्वविशिष्टसंबन्धिनि आकाशे वर्तमानो गगनाभावो नैता-दृशान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणः, तस्य तादात्म्येन प्रतियोगिसमा-नाधिकरणत्वात्; किन्तु घटाभाव एव तथेति तत्प्रतियोगितानवच्छेद-कमेव हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतं गगनत्वमिति तमादायैव

---

तादृशान्यतरसम्बन्धेन सम्बन्धिनि घटभूतलादौ घटाद्यभावस्य तादृशान्य-तरसम्बन्धेन प्रतियोगिव्यधिकरणत्वासम्भवादिति घटत्वादेः पारिभा-षिकावच्छेदकत्वात् तत्र लक्षणसमन्वयः। धूमवान् वह्नेरित्यादौ हेतुम-न्निष्ठाभावप्रतियोगितावच्छेदकधूमत्वस्यापि महानसीयव्यक्तित्वविशि-ष्टस्य तादृशान्यतरसम्बन्धेन सम्बन्धिनि वर्त्तमानस्य घटाद्यभावप्रतियोगि-तानवच्छेदकतया तादृशतद्व्यक्तित्वभिन्नत्वस्य तत्र सत्त्वादतिव्याप्ति-रतस्तादृशभेदकूटनिवेशः। तथा च तादृशयावदन्तर्गतस्वपदेन धूमत्व-स्यापि धर्त्तुं शक्यत्वान्नातिव्याप्तिरिति ध्येयम्।

घटवान् महाकालत्वादित्यत्राव्याप्तिमुद्धरति **तथाचेति। तादृशेति।** तादात्म्यसाध्यताघटकान्यतरसम्बन्धेनेत्यर्थः। **तस्य**=गगनाभावस्य। **प्रतियोगीति।** तादात्म्येन गगनसम्बन्धिनि गगने वर्त्तमान-त्वादित्यर्थः। **घटाद्यभाव एवेति।** घटत्वाद्यवच्छिन्नासम्बन्धित्वस्य गगनत्वविशिष्टसम्बन्धिनि गगने सत्त्वादिति भावः। **तत्प्रतियोगितेति।** घटाद्यभावप्रतियोगितार्थकम्। **तदादायैव**=गगनत्वादिकमादायैव। अन्यत् सुगमम्।

---

सम्बन्धिनि वह्नौ वर्त्तमानस्य निरुक्तसाध्यताघटकतादात्म्यान्यतरसम्बन्धेन प्रतियोगि-व्यधिकरणघटाद्यभावस्य प्रतियोगितानवच्छेदकत्वात् वह्नौ वह्नित्वाभावस्य तादृशा-न्यतरसम्बन्धेन प्रतियोगिव्यधिकरणत्वासम्भवात्। वह्नित्ववह्न्यवयवान्यतराभाव-मादायाऽव्याप्तिवारणायान्यतरसम्बन्धेन साध्यत्वमुक्तम्। तथा च निरुक्तान्यतराभावस्य तादृशान्यतरसम्बन्धेन मूलोक्तप्रतियोगिवैयधिकरण्यविरहान्नाव्याप्तिरिति भावः।

अथैवमपि यद्धर्मविशिष्टसम्बन्धित्वं प्रतियोगिवैयधिकरण्यञ्च केवलतादात्म्यसम्ब-न्धेनैवोच्यतामिति नोक्ताव्याप्तिरिति चेन्न? द्रव्यत्ववान् गगनत्वादित्यत्राव्याप्त्यापत्तेः, हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकस्य घटवृत्तित्वविशिष्टद्रव्यत्वत्वस्य साध्यतावच्छेद-

कालो घटवान् महाकालत्वादित्यादौ लक्षणसङ्गतिः । न चैवं धूमगगनाभावान्यतरस्य संयोगेन साध्यत्वे वन्ह्यादावतिव्याप्तिः, तादृशान्यतरत्वापेक्षया

---

एवं = निरुक्तस्य लक्षणार्थत्वे । धूमगगनाभावेति । नच धूममात्रस्य संयोगेन साध्यतायां वह्निहेतावतिव्याप्त्यसम्भवेऽपि गगनाभावमात्रस्य संयोगेन साध्यतायां वह्निहेतुकस्थले संयोगेन गगनाभावाभावस्य मूलोक्तप्रतियोगिव्यधिकरणत्वासम्भवेनाभावान्तरप्रतियोगितावच्छेदकमात्रस्य तादृशान्यतरसम्बन्धेन गगनाभावत्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकतयातिव्याप्तिसम्भवात् धूमगगनाभावान्यतरस्य साध्यत्वानुसरणं व्यर्थमिति वाच्यम् ? संयोगेन गगनाभावाभावस्यापि साध्यतावच्छेदकसम्बन्धसामान्ये उभयाभावघटितप्रतियोगिव्यधिकरणत्वानपायाद् गगनाभावत्वस्यैव हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वेन धर्तुं शक्यत्वात् । नच तथापि स्वरूपेण धूमगगनाभावोभयत्वाश्रयस्य साध्यत्वे विनिगमनाविरहेण तादृशान्यतरस्य साध्यत्वे क्षतिविरहेऽपि पर्याप्तिसम्बन्धेन तादृशोभयत्वावच्छिन्नस्य संयोगेन साध्यतायामप्यतिव्याप्तिः सम्भवति, तादृशोभयत्वविशिष्टस्य तादृशान्यतरसम्बन्धेन सम्बन्ध्यप्रसिद्धया स्वपदेन तस्योपादानाऽसम्भवादिति वाच्यम् ? साध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यविरहादेवातिव्याप्त्यसम्भवात्, पारिभाषिकानवच्छेदकसाध्यतावच्छेदकस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नवृत्तितावच्छेदकत्वेन विशेषणीयत्वाद्वा सर्वथैवातिव्याप्तेरयोगात् तादृशान्यतरस्य साध्यताया आवश्यकत्वादिति ध्येयम् ।

स्वरूपेण धूमगगनाभावान्यतरस्य साध्यत्वे वह्न्यादेः सद्धेतुत्वादाह संयोगेनेति । अतिव्याप्तिं सम्पादयति तादृशेति । धूमगनाभावान्य-

---

कीभूतद्रव्यत्वत्वविशिष्टस्य तादात्म्येन सम्बन्धिनि द्रव्यत्वे तादात्म्येन प्रतियोगिव्यधिकरणघटाभावप्रतियोगितानवच्छेदकत्वात् ।

अथवा तादात्म्यविषयितान्यतरसम्बन्धेन घटसाध्यकतज्ज्ञानत्वहेतावव्याप्तिः, हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकस्य द्रव्यत्वस्य तादात्म्येन घटत्वविशिष्टसम्बन्धिनि घटे तादात्म्येन प्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वात् तादृशान्यत-

लघुत्वेन धूमत्वस्यैव हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वात्तस्य च संयोगतादात्म्यान्यतरसंबन्धेन यस्तदन्यतरत्वविशिष्टस्य संबन्धी गगनाभावस्तन्निष्ठस्य तादात्म्यसंयोगान्यतरसंबन्धेन प्रतियोगिव्यधिकरणस्य धूमाभावस्य प्रतियोगितावच्छेदकतया धूमगगनाभावान्यतरत्वस्य परिभाषिकाव-

---

वरत्वापेक्षयेत्यर्थः। लघुत्वेनेति। संयोगेन धूमगगनान्यतराभावस्य संयोगेन धूमाभावसमनियततया भेदद्वयावच्छिन्नप्रतियोगिताकभेदरूपस्य तादृशान्यतरत्वस्य जातिस्वरूपधूमत्वापेक्षया गुरुत्वेन निरुक्तान्यतराभावरूपसाध्याभावप्रतियोगितावच्छेदकताया लाघवेन धूमत्व एव कल्पनौचित्यादिति भावः। तस्य च = धूमत्वस्य च। तदन्येति। धूमगगनाभावान्यतरत्वविशिष्टस्येत्यर्थः। तन्निष्ठस्य = गगनाभावनिष्ठस्य। परिभाषिकावच्छेदकत्वविरहादिति। धूमत्वं यदि संयोगावच्छिन्नधूमगगनाभावान्यतराभावप्रतियोगितावच्छेदकं स्यात्तदा धूमगगनाभावान्यतरवान् वह्नेरित्यत्रातिव्याप्तिः स्यात्, साध्यतावच्छेदकसंयोगतादात्म्यान्यतरसम्बन्धेन धूमगगनाभावान्यतरत्वविशिष्टस्य सम्बन्धिनि गगनाभावे वर्त्तमानस्य तादृशान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणस्य धूमाभावस्य प्रतियोगितावच्छेदकताया एव हेतुमन्निष्ठसाध्याभावप्रतियोगितावच्छेदकधूमत्वे सत्त्वेन स्वपदेन धूमगगनाभावान्यतरत्वस्योपादानाऽसम्भवात्, धूमत्वस्य तथात्वेन धर्त्तुं शक्यत्वेऽपि तादृशधूमत्वभि-

---

रसम्बन्धेन यद्धर्मविशिष्टस्य सम्बन्धित्वोक्तावपि विषयितया प्रमेयाभावमादायाव्याप्तिरतोऽन्यतरसम्बन्धेन साध्यत्वाभिधानमिति ध्येयम्।

ननु यद्धर्मविशिष्टस्य सम्बन्धित्वं तादृशान्यतरसम्बन्धेनैव वाच्यम्, प्रतियोगिवैयधिकरण्यञ्च केवलतादात्म्येन विवक्ष्यतामतो नोक्ताव्याप्तिः। न चैवं धूमवान् वह्नेरित्यत्रातिव्याप्तिः, हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकधूमत्वस्य तादृशान्यतरसम्बन्धेन धूमत्वविशिष्टसम्बन्धिपर्वतादिनिष्ठतादृशप्रतियोगिव्यधिकरणधूमाभावप्रतियोगिताव - च्छेदकत्वादिति वाच्यम्? हेतुमन्निष्ठधूमधूमवदन्यतराभावमादायैव तत्रातिव्याप्तिवारणसम्भवादिति चेन्न, कालिकविषयितान्यतरसम्बन्धेन घटसाध्यकमहाकालत्वहेतावव्याप्त्यापत्तेः, पारिभाषिकावच्छेदकाप्रसिद्धेः गगनत्वादेः विषयितासम्बन्धेन

च्छेदकत्वविरहादिति वाच्यम् ? धूमगगनाभावान्यतरत्वस्याप्यखण्डस्य धूमत्वतुल्यतया तस्यैव हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकस्य स्वविशिष्टसंबन्धिनिष्ठतादृशसंबन्धावच्छिन्नप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकतया पारिभाषिकावच्छेदकत्वेनातिव्याप्तिविरहादिति प्राहुः। तन्मन्दम्,

---

न्नत्वस्य साध्यतावच्छेदके धूमगगनाभावान्यतरत्वे सत्त्वादिति तात्पर्यम्।

धूमत्वस्य जातित्वेऽपि भेदद्वयावच्छिन्नप्रतियोगिताकभेदात्मकस्याखण्डोपाधेः धूमगगनाभावान्यतरत्वस्य धूमत्वापेक्षया गुरुत्वासम्भवेन तादृशान्यतराभावप्रतियोगितावच्छेदकं धूमगगनाभावान्यतरत्वमेव न तु धूमत्वं इति न धूमगगनाभावान्यरवान् वह्निरित्यत्रातिव्याप्तिः, धूमगगनाभावान्यतरत्वविशिष्टस्य संयोगतादात्म्यान्यतरसम्बन्धेन सम्बन्धिनि गगनाभावादौ तादृशान्यतरसम्बन्धेन तादृशान्यतरत्वावच्छिन्नासम्बन्धित्वविरहेण तादृशगगनाभावादिनिष्ठस्य संयोगतादात्म्यान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणस्य घटाद्यभावस्य प्रतियोगितानवच्छेदकतया हेतुमन्निष्ठसाध्यीभूततादृशान्यतराभावप्रतियोगितावच्छेदके तादृशान्यतरत्वे सत्त्वेन साध्यतावच्छेदकधूमगगनाभावान्यतरत्वस्य पारिभाषिकावच्छेदकत्वादित्याह धूमेति। अखण्डस्य = निरवच्छिन्नप्रकारताश्रयस्य। धूमत्वतुल्यतयेति। धूमत्वभिन्नत्वविशिष्टं यत् अवच्छिन्नप्रकारतानाश्रयत्वं तद्वत्तयेत्यर्थः। तस्यैव = धूमगगनाभावान्यतरत्वस्यैव। स्वविशिष्टेति धूमगगनाभावान्यन्यतरत्वविशिष्टार्थकम्।

---

गगनत्वविशिष्टसम्बन्धिनि ज्ञानादौ तादात्म्येन प्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदकत्वेन यद्धर्मपदेन तस्य धर्तुमशक्यत्वात्।

अथ साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिकरणताप्रतियोगिकस्वरूपसम्बन्धेन प्रतियोगिनिष्ठनिरूपकतानिरूपिताधिकरणत्वाभावरूपमेव मूलोक्तप्रतियोगिवैयधिकरण्यं विवक्षणीयम्, तथा च यद्धर्मविशिष्टसम्बन्धित्वं प्रतियोगिवैयधिकरण्यञ्च केवलतादात्म्येनोच्यतां तावतैव द्रव्यं गगनत्वात् घटवान् तज्ज्ञानत्वादित्यादौ नाव्याप्तिः, घटवृत्तित्वविशिष्टद्रव्यत्वाभावस्य द्रव्याभावस्य च तादृशप्रतियोगिव्यधिकरणत्वाभावाद् धर्तुमशक्यत्वात् कथमुभयत्रान्यतरत्वस्य निवेशः

रूपवान् घटत्वादित्यादावव्याप्तिप्रसङ्गात् । हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं यद्रूपत्वद्रव्यान्यतरत्वं तस्य तादृशसंबन्धेन रूपत्वविशिष्टसंबन्धिनिष्ठतादृशसंबन्धावच्छिन्नप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वेन रूपत्वस्य पारिभाषिकावच्छेदकत्वात् । तथाहि तादात्म्यसमवायान्यतरसंबन्धेन यद्रूपत्वविशिष्टस्य संबन्धि रूपं पृथिव्यादिकं वा तत्र तादात्म्यसमवायान्यतरसंबन्धेन प्रतियोगिव्यधिकरणो न रूपत्वद्रव्यान्यतरत्वावच्छिन्नाभावः, समवायेन रूपे रूपत्वाख्यप्रतियोगिनस्तादात्म्येन च पृथिव्यादौ द्रव्यात्मकप्रतियोगिनः संबद्धत्वात्, किं तु रूपत्वविशिष्टस्य तथाविधसंबन्धिनिष्ठो यः पटाद्यभावः स एव तादृशप्रतियोगिव्यधिकरण इति रूपत्वद्रव्यान्यतरत्वे तत्प्रतियोगितानवच्छेदकत्वध्रौव्यम् । न च हेतुसमानाधिकरणस्याभावस्यापि तादृशान्यतरसंबन्धेन प्रतियोगिवैयधिकरण्यस्य वक्तव्यत्वान्नैष दोषः ? तथासति समवायेन घटत्वस्य प्रमेयस्य वा साध्यत्वे तादात्म्येन हेतौ घटत्वे प्रमेये वाऽतिप्रसङ्गादिति दिक् ।

---

निरुक्तं मतं दूषयति **तन्मन्दमिति** । रूपवान् घटत्वादित्यादावित्यत्रादिपदात् पटत्वादिहेतुपरिग्रहः । **हेतुसमानाधिकरणेति** घटत्वादिसमानाधिकरणेत्यर्थकम् । तस्य = रूपत्वद्रव्यान्यतरत्वस्य । अव्याप्तिमुपपादयति **तथाहीति** । **पृथिव्यादिकमि**त्यत्रादिपदात् जलतेजसोः परिग्रहः । तत्र = रूपे पृथिव्यादौ च । **तत्प्रतियोगितेति** घटाद्यभावप्रतियोगितेत्यर्थकम् । अन्यत् सुगममिति दिक् ।

यदि वस्तुतस्तु इत्यादिना निरुक्तलक्षणद्वयं न स्यात्, पूर्वोक्तप्रतियोगितावच्छेदकाभाववदवृत्तित्वमेव पारिभाषिकावच्छेदकत्वमुच्यते तदा

---

इति चेन्न ? विशेषरूपेण संसर्गताया अनभ्युपगमात् । अन्यथा पटाद्यभावमादायैव घटवान् महाकालत्वादित्यत्राव्याप्तिवारणसम्भवे साध्यतावच्छेदकसम्बन्धसामान्ये इत्यादिना प्रतियोगिवैयधिकरण्यनिवेशो दीधितिकृतामसङ्गतः स्यादिति ध्येयम् ।

अतएव सत्तावान् जातेरित्यादौ जातिमन्निष्ठाभावप्रतियोगितावच्छेदकगुणान्यत्वविशिष्टसत्तात्वतुल्यवृत्तिकत्वेऽपि सत्तात्वस्य न क्षतिः ।

---

अत एवेति । वस्तुतस्त्वित्यादिकल्पस्यादृतत्वादेवेत्यर्थः । यथाश्रुतस्यावच्छेदकानतिरिक्तवृत्तित्वस्यादरे तु सत्तावान् जातेरित्यादावव्याप्तिः स्यादेवेति भावः ।

जातिमन्निष्ठाभावप्रतियोगितायां सत्तात्वान्यूनवृत्तिविशिष्टसत्तात्वावच्छेद्यत्व-समवायसंबन्धावच्छेद्यत्वोभयसत्त्वादवच्छेद्यताघटितलक्षणस्यापि प्रागु-

---

सत्तावान् जातेरित्यत्राऽव्याप्तिः, जातिमन्निष्ठाभावप्रतियोगितावच्छेदकगुणकर्मान्यत्वविशिष्टसत्तात्वाभाववति घटादौ सत्तात्वस्यावृत्तित्वात् । स्वविशिष्टेत्यादिलक्षणे तु न तत्राऽव्याप्तिः, विशिष्टसत्तात्वस्य सत्तात्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वादित्येवमत एवेत्यादिग्रन्थस्य भावमाह यथाश्रुतस्येत्यादि ।

इतिश्रीवामाचरणभट्टाचार्यविरचिता पारिभाषिकावच्छेदकत्वद्वितीयलक्षणविवृतिः समाप्ता ।

—०❀०—

## अथ प्रतियोगिताधर्मिकोभयाभावघटितलक्षणम् ।

प्रमेयवह्निमान् धूमादित्यादावव्याप्तिवारणाय प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितायां साध्यतावच्छेदकान्यूनवृत्तिधर्मावच्छिन्नत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभावस्य विवक्षितत्वेऽपि सत्तावान् जातेरित्यत्राव्याप्तिः, जातिमद्गुणवृत्तितादृशाभावीयविशिष्टसत्तानिष्ठप्रतियोगितायां साध्यतावच्छेदकीभूतसत्तात्वान्यूनवृत्तिविशिष्टसत्तात्वावच्छिन्नत्वसाध्यतावच्छेदकसमवायावच्छिन्नत्वयोः द्वयोः सत्त्वादित्येव प्रतियोगिताधर्मिकोभयाभावघटितलक्षणमप्यन्यथा व्याचक्षाणानां दीधितिकाराणामेवमित्यादिग्रन्थस्यावतरणवीजमाह जातिमन्निष्ठेति । जाति-

---

यद्वा विषयितया प्रमेयसाध्यकतज्ज्ञानत्वहेतावव्याप्तिः घटाद्यभावस्य यथोक्तप्रतियोगिव्यधिकरणत्वाऽसम्भवेन निरुक्तप्रतियोगिव्यधिकरणाभावाप्रसिद्धेः । प्रतियो-

एवं स्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकाव-च्छेद्यत्वं बोध्यम् ।

---

क्तस्य सत्तावान् जातेरित्यादावव्याप्तिरतस्तदपि परिष्करोति **एवमिति** । स्वम्=साध्यतावच्छेदकम्, अत्र स्ववैशिष्ट्यं साध्यतावच्छेदकताघटकसंब-

---

मद्गुणादिनिष्ठेत्यर्थकम् । **सत्तात्वान्यूनेति** । अत्र साध्यतावच्छेदकान्यून-वृत्तित्वं साध्यतावच्छेदकव्यापकत्वमेव न तु सामानाधिकरण्यसहितं तदसहितं वा यद् यत् साध्यतावच्छेदकसमानाधिकरणभेदप्रतियोगिता-वच्छेदकं तावद्भेदकूटवत्त्वरूपं प्रमेयवह्नित्वसमानाधिकरणभेदप्रति-योगितावच्छेदकतत्तद्वह्नित्वभेदस्य वह्नित्वादौ विरहात् वह्नित्वस्य प्रमेय-वह्नित्वान्यूनवृत्तित्वानुपपत्तेः गौरवाच्च । स्वाभाववद्वृत्तित्वसंसर्गावच्छिन्न-प्रतियोगिताकसाध्यतावच्छेदकाभाववत्त्वं वा तत्, तेन न प्रमेयसाध्यता-वच्छेदकस्थलेऽप्रसिद्धिः । न च तादृशसम्बन्धस्य वृत्त्यनियामकतया तत्स-म्बन्धावच्छिन्नप्रतियोगिताकाभावाऽप्रसिद्धिरिति वाच्यम् ? स्वाभाव-वद्वृत्तित्वस्य वृत्तिनियामकतायाः स्वयमग्रे वक्ष्यमाणत्वादिति ध्येयम् । तदपि = अवच्छेद्यताघटितलक्षणमपि ।

दीधितौ **स्वविशिष्टेति** । तथा च प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नानधिकरणहेत्वधिकरणवृत्त्यभावीयप्रतियोगि-तासामान्ये साध्यतावच्छेदकीभूतयद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियो-गितानवच्छेदकधर्मावच्छिन्नत्व-साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभया-भावः साध्यतावच्छेदकसम्बन्धेन तादृशसाध्यतावच्छेदकावच्छिन्नसामा-नाधिकरण्यं हेतौ व्याप्तिरिति समुदितार्थः, वह्निमान् धूमादित्यादौ तादृश-घटाभावीयघटनिष्ठायां प्रतियोगितायां साध्यतावच्छेदकसंयोगावच्छिन्न-त्वस्य सत्त्वेऽपि साध्यतावच्छेदकवह्नित्वादिविशिष्टसम्बन्धिपर्वतादिनिष्ठा-भावप्रतियोगितानवच्छेदकवह्नित्वाद्यवच्छिन्नत्वविरहेणोभयाभावसत्त्वात्

---

गितावच्छेदकावच्छिन्ननिरूपकतानिवेशे तु घटसाध्यकतज्ज्ञानत्वहेतौ द्रव्याभाव-मादाय पूर्वोक्तरीत्या भवत्यव्याप्तिरिति नव्याः ।

धूमगगनाभावेति । ननु हेतुसमानाधिकरणतादृशान्यतरभेदप्रतियोगितावच्छे-

न्धेनैव वाच्यम्, तेन धूमत्वादीनां कालिकादिसंबन्धेन धूमत्वादिविशिष्टस्य वह्न्यादेः संयोगिनि वर्त्तमानस्याभावस्य प्रतियोगितावच्छेदकत्वेऽपि धूमवान् वह्नेरित्यादौ नातिव्याप्तिः। स्वविशिष्टस्य संबन्धित्वं साध्यतावच्छेदकसम्बन्धेन ग्राह्यम्, तेन धूमत्वाद्यवच्छिन्नप्रतियोगितायां कालिकादिसंबन्धेन यद्धूमत्वविशिष्टस्य संबन्धि तन्निष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यत्व-

लक्षणसमन्वयः, धूमवान् वह्नेरित्यादौ तु धूमनिष्ठायामेव तादृशाभावप्रतियोगितायां संयोगावच्छिन्नत्वस्य धूमत्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकधूमत्वाद्यवच्छिन्नत्वस्य च सत्त्वेन द्वयोः सत्त्वान्नातिव्याप्तिरिति भावः।

टीकायामत्रेति। निरुक्तलक्षणेऽपीत्यर्थः। घटकत्वं सप्तम्यर्थः। तस्य च स्ववैशिष्ट्यमित्यनेनान्वयः। सम्बन्धसामान्येन स्वपदग्राह्यसाध्यतावच्छेदकवैशिष्ट्यविवक्षणे धूमवान् वह्नेरित्यादावतिव्याप्तिः हेतुमन्निष्ठतादृशाभावीयधूमनिष्ठप्रतियोगितायां कालिकसम्बन्धेन धूमत्वविशिष्टस्य घटादेः संयोगेन सम्बन्धिनि भूतलादौ वर्त्तमानस्य धूमाभावस्य प्रतियोगितानवच्छेदकद्रव्यत्वाद्यवच्छिन्नत्वविरहेण तादृशोभयाभावसत्त्वादतः साध्यतावच्छेदकताघटकसम्बन्धेनैव साध्यतावच्छेदकवैशिष्ट्यं वाच्यम्, तथा च नातिव्याप्तिः, समवायेन धूमत्वविशिष्टधूमसंयोगिनि वर्त्तमानघटाद्यभावप्रतियोगितानवच्छेदकधूमत्वावच्छिन्नत्वस्य संयोगावच्छिन्नत्वस्य च तादृशधूमनिष्ठप्रतियोगितायां सत्त्वादित्याह तेनेति। साध्यतावच्छेदकताघटकसम्बन्धेन स्ववैशिष्ट्यविवक्षणेनेत्यर्थः। धूमत्वादीनामिति। आदिना आर्द्रेन्धनसंयोगत्वादिपरिग्रहः। कालिकादीत्यत्रादिना दिक्कृतविशेषणता ग्राह्या। घटादेरित्यत्राप्यादिना पटादिपरिग्रहः। स्वविशिष्टस्य=साध्यतावच्छेदकविशिष्टस्य। ग्राह्यमिति। न तु सम्बन्धसामान्येनेति भावः। तेन=साध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकविशिष्टस्य सम्बन्धित्वविवक्षणेन। धूमत्वेति। हेतुमन्निष्ठप्रतियोगिव्यधिकरणाभावीयेत्यादिः। सम्बन्धि=जलादिकमिति पूरणीयम्। तन्निष्ठेति तादृशजलादिनिष्ठेत्यर्थकम्।

दकान्यतरत्वस्य साध्यतावच्छेदकान्यतरत्वविशिष्टस्य तादृशान्यतरसम्बन्धेन सम्बन्धिनि

विरहेऽपि धूमवान् वह्नेरित्यादौ नातिव्याप्तिः । न च सामान्यतो धूमसंबन्धिनि संयोगेन सर्वस्यैवाभावसत्त्वाद्धूमवन्निष्ठसंयोगसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकाप्रसिद्ध्या कथमतिव्याप्तिरिति वाच्यम् ? गोत्वत्वघटाभावत्वादेरेव तत्प्रसिद्धेः । संयोगसम्बन्धावच्छिन्नगोत्वाद्यभावप्रतियोगितायाः लाघवेन गवेतरासमवेतत्वादिभिरेवावच्छेदात् । न चैवमपि तदवच्छेद्यत्वा-

---

ननु सम्बन्धसामान्येन साध्यतावच्छेदकविशिष्टस्य सम्बन्धित्वविवक्षणेऽपि न धूमवान् वह्नेरित्यादावतिव्याप्तिः, सम्बन्धसामान्येन धूमत्वविशिष्टस्य सम्बन्धिनि पर्वतजलादौ सर्वस्यैव वस्तुनः संयोगेनाभावस्य वर्त्तमानत्वेन सामान्यतो धूमत्वविशिष्टसम्बन्धिनिष्ठसंयोगावच्छिन्नाभावीयप्रतियोगितानवच्छेदकधर्मस्यैवाप्रसिद्धेरित्याशंकते न चेति । वाच्यमिति परेणाऽन्वयः । समाधत्ते गोत्वत्वेति । तत्प्रसिद्धेः=सामान्यतः धूमवन्निष्ठसंयोगसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वप्रसिद्धेः । संयोगेन गवेतरासमवेताभावस्य संयोगेनाभावाभावस्य च संयोगेन गोत्वाभावघटाभावाभावसमानदेशवृत्तिकतया संयोगेन गोत्वाद्यभावप्रतियोगितावच्छेदकत्वं गवेतरासमवेतत्वविशिष्टसकलगोसमवेतत्वाद्यपेक्षया लाघवेन गवेतरासमवेतत्वादावेव कल्पनीयमित्याह संयोगेति । धूमवन्निष्ठेत्यादिः । न च साध्यतावच्छेदकसम्बन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नासम्बन्धिसाध्यतावच्छेदकविशिष्टसम्बन्धिनिष्ठाभावस्यैव लक्षणघटकतायाः अग्रे वक्तव्यतया संयोगेन गोत्वादेः सम्बन्धित्वाप्रसिद्ध्या कथं संयोगावच्छिन्नप्रतियोगिताकगोत्वाद्यभावमादायातिव्याप्तिः सम्भवतीति वाच्यम् ? यथाश्रुतलक्षणमभिप्रेत्यैवोक्ताभावयोर्धर्त्तव्यत्वात् साध्यतावच्छेदकातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकावच्छिन्नत्वोभयाभाववत्सम्बन्धित्वाभावस्य साध्यसम्बन्धितायां विवक्षितत्वाद्वा समवायेन गोत्वसम्बन्धितामादायोक्ताभावस्य लक्षणघटकत्वसम्भवाच्चेति ध्येयम् । लाघवेनेति । गवेतरासमवेतत्वसहितसकलगोसमवेतत्वापेक्षया घटप्रतियोगिकत्वाभावत्वापेक्षया चेत्यादिः । अवच्छेदात्=अवच्छिन्नत्वात् ।

---

वर्त्तमानस्य तादृशान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणाभावस्य प्रतियोगितानवच्छेदकत्वात् कथमतिव्याप्तिः, नहि तादृशभेदप्रतियोगितावच्छेदकत्वमपि धूमत्वे कल्पयितुं

प्रसिद्ध्यैव नातिव्याप्तिः, गोत्वादिभेदप्रतियोगितायां तत्सौलभ्यात्। न हि सापि गवेतरासमवेतत्वमात्रावच्छिन्ना? गोरूपादौ गोत्वभेदासत्त्वप्रसङ्गात्। यदि च गोत्वत्वावच्छेद्यत्व-संयोगसम्बन्धावच्छेद्यत्वोभयत्वावच्छिन्नाभावाप्रसिद्ध्यैव नातिव्याप्तिः, गवेतरासमवेतत्वाद्यवच्छेद्यत्वमात्रघटिततादृशोभयत्वस्यैव लघुत्वेन प्रतियोगितावच्छेदकत्वादिति विभाव्यते, तदोक्तरीत्या वह्निमान् धूमादित्यादावव्याप्तिवारणार्थमेव साध्यतावच्छेदकसम्बन्धेन स्वविशिष्टस्य सम्बन्धित्वं निवेश्यम्।

---

नन्वेवमपि नातिव्याप्तिः सम्भवति, धूमवन्निष्ठसंयोगावच्छिन्नगोत्वाभावप्रतियोगितावच्छेदकताया गवेतरासमवेतत्वनिष्ठाया अभावस्य गोत्वत्वे सत्त्वेऽपि तादृशगोत्वत्वावच्छिन्नत्वस्य कुत्रापि प्रतियोगितायामप्रसिद्धतया तदभावस्य हेतुमन्निष्ठाभावप्रतियोगितायां वक्तुमशक्यत्वादित्याशंकते **नन्वेवमिति**। नातिव्याप्तिरिति परेणान्वयः। एवम्=साध्यवन्निष्ठसंयोगावच्छिन्नप्रतियोगितानवच्छेदकत्वस्य गोत्वत्वादौ सत्त्वेऽपि। तदवच्छेद्यत्वेति। गोत्वत्वावच्छिन्नत्वस्याप्रसिद्ध्यैवेत्यर्थः। समाधत्ते **गोत्वादीति**। गोत्वं नेत्याकारकभेदीयप्रतियोगितायामित्यर्थः। तत्सौलभ्यात्=गोत्वत्वाद्यवच्छिन्नत्वस्य सुलभत्वसम्भवात्।

ननु गोत्वादिभेदीयप्रतियोगितावच्छेदकत्वमपि लाघवात् गवेतरासमवेतत्वादावेव कल्पनीयं तथा च सर्वथैव गोत्वत्वाद्यवच्छिन्नत्वस्य प्रतियोगितायामप्रसिद्धत्वात् कुतोऽतिव्याप्तिरित्यत आह **न हीति**। सापि=गोत्वादिभेदीयप्रतियोगितापि। गोत्वभेदीयप्रतियोगितानिष्ठं गवेतरासमवेतत्वसकलगोसमवेतत्वरूपधर्मद्वयावच्छिन्नत्वमेव गोत्वत्वावच्छिन्नत्वमिति केवलगवेतरासमवेतत्वावच्छिन्नत्वमेव तत्र निषेधयति **गवेतरेति**। कथन्तान्निवृत्त्यर्थमाह **गोरूपादाविति**। गवेत-

---

शक्यते, गगनाभावेऽपि तादृशान्यतरभेदसत्त्वप्रसङ्गादिति अन्यतरत्वस्याखण्डोपाधित्वाभिधानमयुक्तमिति चेन्न? साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताया लक्षणघटकत्वमभिप्रेत्यैव तादृशातिव्याप्तेर्दत्तत्वात्।

इत्थं च निरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितासामान्ये एव साध्यवन्निष्ठाभावीयसंयोगसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकीभूतगो-

---

त्रासमवेतत्वस्य गोत्वत्वापेक्षया लघुत्वेन तत्र यदि गोत्वभेदीयप्रतियोगितावच्छेदकत्वं कल्प्यते, तदा गोरूपे गोत्वं नेत्याकारकगोत्वभेदाऽसत्त्वप्रसङ्गः स्यात्, प्रतियोगितावच्छेदकस्य गवेतरासमवेतत्वस्य गोरूपे सत्त्वाद् भेदप्रतियोगितावच्छेदकस्यैव भेदविरोधित्वात्, एवं घटाभावभेदप्रतियोगितावच्छेदकं यदि अभावत्वमात्रं स्यात् तदा पटाभावे घटाभावभेदस्यासत्त्वप्रसङ्गः स्यादिति भावः ।

ननु गोत्वत्वावच्छिन्नत्वस्य गोत्वभेदीयप्रतियोगितायां प्रसिद्धत्वेऽपि नातिव्याप्तिः गवेतरासमवेतत्वावच्छिन्नत्वसंयोगसम्बन्धावच्छिन्नत्वोभयत्वापेक्षया गोत्वत्वावच्छिन्नत्वसंयोगसम्बन्धावच्छिन्नत्वोभयत्वस्य गुरुतया तादृशोभयत्वावच्छिन्नाभावाऽप्रसिद्धेः । न च निरुक्तोभयनिष्ठप्रतियोगिताकाभाव एव हेतुमन्निष्ठतादृशाभावप्रतियोगितायां विवक्ष्यतामिति भवत्यतिव्याप्तिरिति वाच्यम् ? तथा सति साध्यतावच्छेदकसम्बन्धेन साध्यसम्बन्धिनिष्ठत्वनिवेशेऽपि व्यभिचारिमात्रेऽतिव्याप्त्यापत्तेः । हेतुमन्निष्ठसाध्याभावप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकधर्मावच्छिन्नत्व-घटैतत्त्रितयाभावस्याक्षतत्वादित्येवं यदि चेत्यादिनाशंक्य समाधत्ते तदेत्यादि । तथाचोक्तरीत्या धूमवान् वह्नेरित्यादावतिव्याप्तिवारणेऽपि सामान्यतो वह्नित्वविशिष्टसम्बन्धिनिष्ठसंयोगावच्छिन्नाभावीयप्रतियोगितानवच्छेदकगोत्वत्वावच्छिन्नत्व-संयोगसम्बन्धावच्छिन्नत्वोभयत्वावच्छिन्नाभावाप्रसिद्धया उक्तरीत्यैव वह्निमान् धूमादित्यादावव्याप्तिः स्यात् यदि साध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकविशिष्टसम्बन्धित्वप्रवेशो न स्यादिति भावः ।

इत्थञ्चेति । संयोगसम्बन्धावच्छिन्नगोत्वाभावीयप्रतियोगितानवच्छेदकत्वस्य गोत्वत्वे सत्त्वे चेत्यर्थः । निरुक्तेति । प्रतियोगितावच्छेदक-

---

न च तथापि अयोगोलकावृत्त्यभावमादायैव नातिव्याप्तिरिति वाच्यम् ? तादृशे एव साध्ये पर्वतजात्यन्यतरत्वहेतावतिव्याप्तेरभिप्रेतत्वात्, जातौ संयोगेन वृत्त्यप्रसिद्धेः स्वरूपेण जात्यवृत्तेः संयोगेनाभावस्य प्रतियोगितावच्छेदकताया द्रव्यत्वे कल्पनीयतया अतिव्याप्तिसम्भवादिति ध्येयम् ।

त्वत्वाद्यवच्छेद्यत्वसंयोगसम्बन्धावच्छेद्यत्वोभयत्वावच्छिन्नाभावसत्त्वाद्धूमवान् वह्नेरित्यत्रैवातिव्याप्तिः, गुरुतयोक्तक्रमेण तादृशोभयत्वावच्छिन्नाभावाप्रसिद्ध्या वह्निमान् धूमादित्यादावव्याप्तिर्वा स्यादतः प्रतियोग्यसम्बन्धित्वेनापि स्वविशिष्टसम्बन्धी विशेषणीयः। तदर्थश्च प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नासंबन्धित्वम्। तेन सम्बन्धसामा-

---

सम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नानधिकरणहेत्वधिकरणनिष्ठाभावीयप्रतियोगितासामान्य एवेत्यर्थः। साध्यवन्निष्ठेति धूमादिमन्निष्ठेत्यर्थकम्। अतिव्याप्तिरिति। संयोगेन वस्तुमात्रस्यैवाव्याप्यवृत्तितया गोत्वत्वघटाभावत्वादिकमेव धूमवन्निष्ठसंयोगावच्छिन्नप्रतियोगिताकाभावीयप्रतियोगितानवच्छेदकमिति तदवच्छिन्नत्व-संयोगावच्छिन्नत्वयोर्द्वयोरेवाभावस्य धूमनिष्ठप्रतियोगितायां सत्त्वाद् धूमवान् वह्नेरित्यादावतिव्याप्तिरिति भावः।

यदि गवेतरासमवेतत्वावच्छिन्नत्वघटितोभयत्वापेक्षया गोत्वत्वावच्छिन्नत्वघटितोभयत्वस्य गुरुत्वेन तादृशोभयत्वावच्छिन्नत्वाभावाप्रसिद्ध्यैव नोक्तातिव्याप्तिरित्युच्यते तदा निरुक्तयुक्त्या वह्निमान् धूमादित्यादावव्याप्तिः, गोत्वत्वावच्छिन्नत्वघटितोभयत्वावच्छिन्नाभावाप्रसिद्धेरित्याह गुरुतयेति। अतः = निरुक्ताव्याप्त्यादिदोषतः। स्वविशिष्टसम्बन्धी = साध्यतावच्छेदकविशिष्टसम्बन्धी। तदर्थश्च = प्रतियोग्यसम्बन्धित्वरूपविशेषणदलार्थश्च।

प्रतियोगितेति। तथा च प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नानधिकरणहेत्वधिकरणनिष्ठाभावीयप्रतियोगितासामान्ये प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नासम्बन्धी यः साध्यतावच्छेदकताघटकसम्बन्धेन साध्यतावच्छेदकविशिष्टस्य साध्यतावच्छेदकसम्बन्धेन सम्बन्धी तन्निष्ठाभावप्रतियोगितानवच्छेदकधर्मावच्छिन्नत्व-साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभावस्तादृशसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरित्येतावत्पर्यन्तं लक्षणार्थस्य पर्यवसिततया न धूमवान् वह्नेरित्यादावतिव्याप्तिः, संयोगेन धूमत्वा-

---

रूपवान् पृथिवीत्वादिति। अथात्र वह्निमान् धूमादित्यादौ प्रसिद्धस्थले तत्पर्वतान्यत्वविशिष्टाभावमादायाव्याप्तिसम्भवे स्थूलान्तरेऽव्याप्तिदानमनुचितमिति

न्येन यः प्रतियोगितावच्छेदकावच्छिन्नासम्बन्धी वह्नित्वविशिष्टसम्बन्धी पर्व-तादिस्तन्निष्ठस्य प्रलयपूर्वोत्पन्नकर्मात्यन्ताभावस्य प्रतियोगितानवच्छेदकं यद् घटत्वादिकं तदवच्छेद्यत्व-संयोगसम्बन्धावच्छेद्यत्वयोश्च साधनवन्निष्ठा-भावप्रतियोगितायां सत्त्वेऽपि वह्निमान् धूमादित्यादौ नाव्याप्तिः ।

वच्छिन्नासम्बन्धित्वस्य धूमसम्बन्धिनि पर्वतादौ सत्त्वात् घटत्वावच्छि-न्नासम्बन्धिधूमसम्बन्धिपर्वतादिनिष्ठघटाद्यभावप्रतियोगितानवच्छेदकधूम-त्वावच्छिन्नत्व-संयोगावच्छिन्नत्वोभयस्यैव वह्निमन्निष्ठतादृशाभावीयधूम-निष्ठप्रतियोगितायां सत्त्वात् । न वा वह्निमान् धूमादित्यादावव्याप्तिः धूमा-दिमन्निष्ठतादृशघटाभावीयघटनिष्ठप्रतियोगितायां घटत्वावच्छिन्नासम्ब-न्धिवह्निसम्बन्धिपर्वतादिनिष्ठघटाभावीयप्रतियोगितानवच्छेदकवह्नित्वाव-च्छिन्नत्वघटितोभयाभावस्याक्षतत्वादिति तात्पर्यम् ।

प्रतियोगितावच्छेदकसम्बन्धनिवेशप्रयोजनमाह **तेनेति** । सम्बन्धसा-मान्येन = संयोगसमवायकालिकस्वरूपाद्यन्यतमसम्बन्धेन । प्रतियोगिता-वच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धित्वानभिधाने निरुक्तान्यतमसम्बन्धेन तथात्वाभिधाने वह्निमान् धूमादित्यादावव्याप्तिः, धूमादिमन्निष्ठाभावीय-घटादिनिष्ठप्रतियोगितायां वह्नित्वविशिष्टस्य संयोगसम्बन्धेन सम्बन्धिनि पर्वतादौ प्रतियोगिव्यधिकरणो न घटाद्यभावः, कालिकादिना घटादेः सम्बन्धित्वस्यैव पर्वतादौ सत्त्वात् किन्तु प्रलयोत्पन्नकर्मात्यन्ताभाव एव तथा, विभिन्नकालीनयोराधाराधेयभावानभ्युपगमेन केनाऽपि सम्बन्धेन प्रलयोत्पन्नकर्मसम्बन्धितायाः पर्वतादौ विरहादिति तादृशकर्मात्यन्ताभाव-तियोगितानवच्छेदकं यद् घटत्वं तदवच्छिन्नत्व-संयोगसम्बन्धावच्छि-न्नत्वयोः द्वयोरेव सत्त्वादित्याह **प्रतियोगितेति** । प्रलयोत्पन्नकर्मत्व-स्येत्यादिः ।

**नाव्याप्तिरिति** । न चासम्भवसम्भवेऽव्याप्त्यभिधानमनुचितमिति वाच्यम् ? नित्यरूपत्वादिसाध्यकैतत्त्वहेत्वादौ लक्षणसमन्वयसम्भवात्

चेन्न ? साध्यतावच्छेदकातिरिक्ताभावानवच्छिन्नत्वस्य प्रतियोगितायां निवेशनीयत्वात् ।

न च तथापि तत्पर्वतासंयुक्तवह्निसंयुक्तवह्निमदन्यतराभावप्रतियोगितावच्छेद-कस्य तादृशान्यतरत्वस्य वह्नित्वविशिष्टस्य सम्बन्धिनि वह्नौ पर्वते च निरुक्तान्यतर-

१५

न वा प्रतियोग्यसंबन्धिसाध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकीभूतविशिष्टसत्त्वावच्छेद्यत्व-समवायसम्बन्धावच्छेद्यत्वयोः साधनवन्निष्ठाभावप्रतियोगितायां सत्त्वेऽपि सत्तावान् जातेरित्यादावव्याप्तिप्रसङ्गः। प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धी यः साध्यतावच्छेदकावच्छिन्नसम्बन्धी तन्निष्ठाभा-

---

हेतुसमानाधिकरणाभावीयघटादिनिष्ठप्रतियोगितायामेव साध्यसम्बन्धिनि नित्यरूपे घटादेः केनापि सम्बन्धेनावर्त्तमानतया तादृशघटाद्यभावप्रतियोगितानवच्छेदकनित्यरूपत्वत्वावच्छिन्नघटितोभयाभावस्य सत्त्वादिति ध्येयम्।

साध्यसम्बन्धिनि प्रतियोगितावच्छेदकावच्छिन्नाऽसम्बन्धित्वनिवेशप्रयोजनमाह न वेति। अप्रसङ्ग इति परेणान्वयः। सत्तावान् जातेरित्यादौ साध्यीभूतसत्तासम्बन्धिनि विशिष्टसत्ताभावप्रतियोगित्वाश्रयासम्बन्धित्वविरहेण सत्तासम्बन्धिनिष्ठप्रतियोगिव्यधिकरणाभावो न विशिष्टसत्ताभावः अपितु घटाद्यभाव एव, तत्प्रतियोगितानवच्छेदकविशिष्टसत्तात्वावच्छिन्नत्व-समवायावच्छिन्नत्वोभयस्यैव साधनीभूतजातिमद्गुणादिनिष्ठाभावीयविशिष्टसत्तानिष्ठप्रतियोगितायां सत्त्वादव्याप्तिः स्यात् यदि साध्यसम्बन्धिनि प्रतियोगितावच्छेदकावच्छिन्नासम्बन्धित्वप्रवेशो न स्यादित्याशयवानाह प्रतियोग्येति। प्रतियोगित्वाश्रयेत्यर्थकम्। साधनवन्निष्ठेति। जातिमद्गुणादिनिष्ठाभावीयविशिष्टसत्तानिष्ठप्रतियोगितायामित्यर्थः। प्रसङ्ग इति। अव्याप्तिरित्यर्थः। प्रतियोगितावच्छेदकावच्छिन्नासम्बन्धित्वनिवेशे तु नाव्याप्तिः, जातिमन्निष्ठाभावीयविशिष्टसत्तानिष्ठप्रतियोगितायां विशिष्टसत्तात्वावच्छिन्नाऽसम्बन्धिसत्तासम्बन्धिगुणादिनिष्ठविशिष्टसत्ताभावप्रतियोगितानवच्छेदकसत्तात्वावच्छिन्नत्वघटितोभयाभावस्य वर्त्तमानत्वादिति भावः।

साध्यतावच्छेदकविशिष्टसम्बन्धिनिष्ठाभावीयप्रतियोगित्वं यदि यत्किञ्चित्सम्बन्धावच्छिन्नं तदा वह्निमान् धूमादित्यादौ सर्वत्राऽसम्भवः,

---

सम्बन्धेन प्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकतया वह्निमान् धूमादित्यादावेवाव्याप्तिः सम्भवति, नहि तादृशान्यतराभावस्तत्र प्रतियोगिव्यधिकरणः वह्नौ तादृशाभावप्रतियोगिनो वाय्वादेः पर्वते च तादृशपर्वतरूपप्रतियोगिनः सत्त्वात् इति

वप्रतियोगितानवच्छेदकं न घटाभावत्व-गोत्वत्वादिकम्, तस्यापि साध्यवन्निष्ठतादृशभेदादिप्रतियोगितावच्छेदकत्वात्, किन्तु लघुसमनियत-गुरुप्रमेयधूमत्वादिकमेव तथा, तथा च तदवच्छेद्यत्वाप्रसिद्ध्या वह्निमान् धूमादित्यादावसम्भवोऽव्याप्तिर्वेत्यतः साध्यवन्निष्ठाभावप्रतियोगित्वमपि साध्यतावच्छेदकसम्बन्धावच्छिन्नं ग्राह्यम् । तेन संयोगादिसम्बन्धावच्छिन्न-प्रतियोगितानवच्छेदकीभूतगोत्वत्वाद्यवच्छेद्यत्वप्रसिद्धैव न लक्षणसम्भवः ।

---

साध्यीभूतवह्निमति पर्वतादौ यत्किञ्चित्समवायादिना वह्न्यादेरभावस्य तादात्म्येन गोत्वादिभेदस्यापि च सत्त्वेन गोत्वत्वादावपि साध्यवन्निष्ठा-भावप्रतियोगितानवच्छेदकतायाः प्रसिद्ध्यसम्भवेन प्रमेयधूमत्वादेरेव तादृशप्रतियोगितानवच्छेदकतया प्रतियोगितायां कुत्रापि तादृशगुरुधर्मा-वच्छिन्नत्वस्याप्रसिद्धत्वात् तद्घटितोभयाभावस्य हेतुमन्निष्ठाभावप्रतियो-गितायां वक्तुमशक्यत्वादतः साध्यवन्निष्ठाभावीयप्रतियोगित्वं साध्यता-वच्छेदकसम्बन्धावच्छिन्नं वाच्यम्, तथा च नासम्भवः, वह्निमन्निष्ठघटा-द्यभावीयसंयोगावच्छिन्नप्रतियोगितानवच्छेदकप्रसिद्धवह्नित्वावच्छिन्नत्व-घटितोभयाभावस्य धूमादिमन्निष्ठाभावीयघटनिष्ठप्रतियोगितायां सत्त्वा-दित्याह **प्रतियोगितेति** । तस्यापि = गोत्वत्वस्यापि । **साध्यवन्निष्ठेति** । वह्न्यादिमन्निष्ठगोत्वभेदप्रतियोगितावच्छेदकत्वादित्यर्थः । **लघुसमनिय-तेति** । धूमत्वादिसमनियतेत्यर्थकम् । **तदवच्छेद्यत्वेति** । प्रमेयधूमत्वा-वच्छिन्नत्वाप्रसिद्ध्येत्यर्थः । असम्भवोऽव्याप्तिर्वेति दोषद्वयानुधावनप्रयो-जनमन्यत्रानुसन्धेयम् । तेन = साध्यवन्निष्ठाभावीयप्रयोगितायां साध्य-तावच्छेदकसम्बन्धावच्छिन्नत्वस्य विवक्षणेन ।

नन्वेवं स्वामित्वसम्बन्धेन धनसाध्यकचैत्रत्वहेतावव्याप्तिः वृत्त्य-नियामकस्वामित्वसम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेरित्यत आह

---

वाच्यम्? साध्यप्रतियोगिको यः साध्यतावच्छेदकसम्बन्धः तत्प्रतियोगितावच्छेदका-वच्छिन्नप्रतियोगिकत्वविशिष्टसाध्यतावच्छेदकसम्बन्धनिवेशात् तत्राव्याप्तेरयोगात् वह्निप्रतियोगिको यः संयोगस्तत्प्रतियोगितावच्छेदकं न निरुक्तान्यतरत्वम् इति साध्यतावच्छेदकसम्बन्धस्य धर्तुमशक्यतया अन्यतराभावस्य वह्नित्वविशिष्ट-

वस्तुतः प्रागुक्तयुक्त्यात्रापि साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धित्वं साध्यतावच्छेदकावच्छिन्नसम्बन्धिनो वक्तव्यम्, नतु प्रतियोगितापि तादृशसम्बन्धावच्छिन्ना ग्राह्या । नन्वेवमपि साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धिसाध्यतावच्छेदकावच्छिन्नसम्बन्धिनिष्ठाभावाप्रसिद्ध्या

---

वस्तुतः इति। प्रागुक्तयुक्त्येति । न च वृत्त्यनियामकसम्बन्धावच्छिन्नप्रतियोगित्वं स्वीकृत्यैव प्रतियोगिताधर्मिकोभयाभावघटितलक्षणप्रणयनस्य पूर्वमभिहिततया साध्यवन्निष्ठाभावप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशेऽपि न कोऽपि दोष इति प्रागुक्तयुक्त्येत्यभिधानमसङ्गतमिति वाच्यम्? प्रागुक्तयुक्त्येत्यनेन पूर्वाभिहितलाघवस्यैवाभिप्रेतत्वात्, साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेन प्रतियोगितानिवेशापेक्षया साध्यतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यनिवेशस्यैव लघुत्वादिति ध्येयम् । साध्यतावच्छेदकसम्बन्धेनेत्यादि । तथा च साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वप्रतियोगितावच्छेदकावच्छिन्नसम्बद्धतानिरूपित - सम्बन्धित्वाभाववान् यः साध्यतावच्छेदकावच्छिन्नसम्बन्धी तन्निष्ठाभावीययत्किञ्चित्सम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकधर्मावच्छिन्नत्वघटितोभयाभावस्यैव विवक्षिततया धनी चैत्रत्वादित्यादौ समवायादिना घटाभावमादायैव लक्षणसमन्वयः। साध्यवति सम्बन्धान्तरेण साध्याभावस्य निरुक्तप्रतियोगिवैयधिकरण्यविरहादेव प्रायशोऽव्याप्तिर्न सम्भवतीति हृदयम् ।

शंकते नन्वेवमपीति । एवमपि = साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धित्वस्य साध्यसम्बन्धिनि विवक्षणेऽपि। कालिकसम्बन्धेन वस्तुमात्रस्य महाकाले सत्त्वादाह साध्यतेति । कालिकसम्बन्धेनेत्यर्थः।

---

सम्बन्धिनि प्रतियोगिव्यधिकरणत्वात् । रूपवान् पृथिवीत्वादित्यादौ तु रूपप्रतियोगिको यः समवायः तत्प्रतियोगितावच्छेदकमेव तादृशान्यतरत्वं इति तादृशान्यतराभावो न रूपत्वविशिष्टसम्बन्धिनि प्रतियोगिव्यधिकरणस्तथा च भवति रूपवान् पृथिवीत्वादित्यत्राव्याप्तिरिति वदन्ति ।

ननु साध्यतावच्छेदकसम्बन्धावृत्तिप्रतियोगिकतादात्म्यान्यतरसम्बन्धेनैव यद्धर्मविशिष्टसम्बन्धित्वस्य प्रतियोगिवैयधिकरण्यस्य च निवेशनीयत्वान्न रूपवान् पृथिवी-

विभुत्वविशिष्टघटवान् महाकालान्यत्वादित्यादावव्याप्तिः । महाकालान्यत्वविशिष्टघटत्वावच्छिन्नाभावस्यैव तादृशस्य कथञ्चिन्महाकाले प्रसिद्ध्या तत्राव्याप्तिवारणेऽपि तद्वह्नीयसंयोगसम्बन्धेन वह्नेः साध्यतायां सद्धेतावव्याप्तिः । तत्सम्बन्धेन यत्प्रतियोगिसम्बन्धि तदन्यत्वस्य तद्वह्निमत्यभावात् । महाकाल-

**विभुत्वविशिष्टेति** । सामानाधिकरण्यसम्बन्धेनेत्यादिः । कालिकेन घटसम्बन्धिनि स्पन्दादौ स्पन्दासमानकालीनतत्तद्व्यक्त्यभावस्य कालिकेन प्रतियोगिव्यधिकरणस्य प्रसिद्धिसम्भवात् **विभुत्वेति** । तथा च विभुत्वविशिष्टघटस्य कालिकेन महाकाल एव सत्त्वात् तत्र च तेन सम्बन्धेन प्रतियोग्यसम्बन्धित्वाप्रसिद्ध्या भवति विभुत्वविशिष्टघटवान् महाकालत्वादित्यत्राव्याप्तिरित्यभिप्रायः । महाकालान्यत्वविशिष्टघटस्य कालिकेन महाकालेऽसत्त्वात्तदभावस्यैव महाकाले निरुक्तप्रतियोगिव्यधिकरणस्य प्रसिद्धिसम्भवात् तत्र नाव्याप्तिरित्याह **महाकालेति** । तादृशस्य = प्रतियोगितावच्छेदकावच्छिन्नाऽसम्बन्धितादृशघटसम्बन्धिमहाकालनिष्ठस्य । पूर्वोक्तयुक्त्या महाकालान्यत्वविशिष्टघटस्यापि महाकाले सत्त्वमाशंक्याह **कथञ्चिदिति** । तत्र = विभुत्वविशिष्टघटवान् महाकालत्वादित्यत्र ।

**तद्वह्नीयेति** पर्वतीयवह्निप्रतियोगिकसंयोगेनेत्यर्थः । सद्धेतावव्याप्तिः = तत्पर्वतत्वादावव्याप्तिः । अव्याप्तिमुपपादयति **तत्संबन्धेनेति** । पर्वतीयवह्निप्रतियोगिकसंयोगेनेत्यर्थः । प्रतियोगिसम्बन्धि = वह्निसम्बन्धि । वह्निमत्यभावात् = पर्वतादावभावात् । तथा च तेन सम्बन्धेन प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्यैव भवत्यव्याप्तिरिति भावः ।

त्वादित्यत्राव्याप्तिः, तादृशान्यतरसम्बन्धेन रूपत्वविशिष्टसम्बन्धिनि घटादौ निरुक्तान्यतराभावस्य प्रतियोगिव्यधिकरणस्य सत्त्वेन यद्धर्मपदेन रूपत्वस्य धर्तुमशक्यत्वादिति चेत् न । शब्दवान् गगनत्वादित्यत्राव्याप्त्यापत्तेः, हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकस्य शब्दत्वगगनान्यतरत्वस्य शब्दत्वविशिष्टसम्बन्धिनि गगने वर्तमानस्य तादृशान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणाभावस्य प्रतियोगितानवच्छेदकत्वात् ।

अथैवमपि साध्यतावच्छेदकसम्बन्धावृत्तिप्रतियोगिकतादात्म्यान्यतरीययत्सम्बन्धेन स्वविशिष्टसम्बन्धिनि अन्यतरीयतत्सम्बन्धेन प्रतियोगिव्यधिकरणाभावप्रति-

निरूपितविशेषणतया घटादेः साध्यतायां महाकालत्वहेतावुक्तक्रमेणाप्यव्याप्तिवारणासम्भवाच्च, तेन सम्बन्धेन यः प्रतियोगिसम्बन्धी तदन्यत्वस्य महाकाले विरहात्।

न च साध्यतावच्छेदकसम्बन्धसामान्ये साध्यतावच्छेदकावच्छिन्नसम्बन्धियत्किञ्चिद्व्यक्त्यनुयोगिकत्व-यादृशप्रतियोगितावच्छेदकावच्छिन्नप्र-

---

घटवान् महाकालत्वादित्यत्राप्यव्याप्तिमाह महाकालेति। महाकालानुयोगिककालिकसम्बन्धेनेत्यर्थः। उक्तक्रमेण = प्रतियोगिव्यधिकरणाभावप्रसिद्ध्या। उक्तक्रममप्याह तेनेत्यादि। महाकालानुयोगिककालिकसम्बन्धेन यः प्रतियोगिनो घटादेः सम्बन्धी महाकालः तदन्यत्वस्येत्यर्थः। महाकाले इति। महाकालानुयोगिककालिकसम्बन्धेन साध्यीभूतघटसम्बन्धिनीत्यादिः।

इदमत्रावधेयम्। विशेषरूपेण संसर्गताभ्युपगमे साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नसम्बन्धिताप्रतियोगिकस्वरूपसम्बन्धेन यादृशप्रतियोगितावच्छेदकावच्छिन्नसम्बन्धित्वाभाववान् साध्यसम्बन्धी तन्निष्ठाभावीयतादृशप्रतियोगितानवच्छेदकधर्मावच्छिन्नत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभावस्य हेतुमन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितायां विवक्षणेनैव महाकालानुयोगिककालिकेन घटसाध्यकमहाकालत्वहेतौ साध्यवति पटाद्यभावमादाय लक्षणसमन्वयसम्भवे तत्राव्याप्तिदानमनुचितम्, विशेषरूपेण संसर्गतानभ्युपगमे तु महाकालानुयोगिककालिकेनाऽपि साध्यत्वाऽयोगादव्याप्तिदानस्यानौचित्यं दुर्वारमिति।

तटस्थः शङ्कते नचेति। वाच्यमिति परेणान्वयः। साध्यतेति। तथा च साध्यतावच्छेदकसम्बन्धसामान्ये साध्यतावच्छेदकयद्धर्मावच्छिन्न-

---

योगितानवच्छेदकतादृशप्रतियोगितावच्छेदककत्वमेव वाच्यम्, तथा च न रूपवान् पृथिवीत्वात् शब्दवान् गगनत्वादित्यादावव्याप्तिः, हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं यत् तादृशतादृशान्यतरत्वं तत्र यत्पदेनावृत्तिप्रतियोगिकतादात्म्यस्य धर्तुमशक्यतया यत्पदग्राह्यसाध्यतावच्छेदकसम्बन्धेन साध्यसम्बन्धिनि घटे गगने च अन्यतरीयतत्सम्बन्धेन प्रतियोगिव्यधिकरणतादृशान्यतराभावप्रतियोगितावच्छेदकस्य

तियोगिकत्वोभयाभावस्तादृशप्रतियोगितानवच्छेदकावच्छिन्नत्वं निवेश्यमतो गगनाभावद्वारैव प्रसिद्धिरिति वाच्यम् ? स्वरूपसम्बन्धेन गगनादेर्वृत्तिमत्त्वपक्षे एव प्रतियोगिताधर्मिकोभयाभावगर्भनिरुक्तयादरात्, तत्र गगनाभावमादाय प्रसिद्ध्यसम्भवात् । कालिकविशेषणतायां गगनत्वावच्छिन्नप्रतियोगिकत्व-साध्यवन्महाकालानुयोगिकत्वयोः सत्त्वादिति चेत्, एतदस्वरसेनैव प्रतियोगितयोरित्यादिना प्रतियोगिवैयधिकरण्यमुपेक्ष्य लक्षणान्तरं वक्ष्यते इत्येके ।

---

सम्बन्धियत्किञ्चिद्व्यक्त्यनुयोगिकत्व-यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वोभयाभावस्तादृशप्रतियोगितानवच्छेदकधर्मावच्छिन्नत्व-साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभावः प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितायां वर्तते तादृशसाध्यतावच्छेदकधर्मावच्छिन्न-सामानाधिकरण्यं हेतौ व्याप्तिरिति फलितार्थः । अस्ति च घटवान् महाकालत्वादित्यादौ साध्यतावच्छेदकमहाकालानुयोगिककालिकसम्बन्ध-सामान्ये साध्यसम्बन्धिमहाकालानुयोगिकत्वसत्त्वेऽपि गगनत्वावच्छिन्न-प्रतियोगिकत्वविरहादुभयाभावसत्त्वात् तादृशप्रतियोगितानवच्छेदकघट-त्वाद्यवच्छिन्नत्व-कालिकसम्बन्धावच्छिन्नत्वोभयाभावस्य च हेतुमन्निष्ठ-तादृशाभावीयसमवायाद्यवच्छिन्नघटनिष्ठप्रतियोगितायां सत्त्वेन लक्षण-समन्वयः ।

अत्र सम्बन्धपदं विहाय साध्यतावच्छेदकसामान्ये इत्युक्तौ अनुयोगितासम्बन्धेन कालिकविशिष्टस्य महाकालस्य तादात्म्येन साध्यतायां तद्व्यक्तित्वहेतावव्याप्तिः, साध्यतावच्छेदकीभूते कालिके घटत्वपटत्वाद्यवच्छिन्नप्रतियोगिकत्व-साध्यसम्बन्धिमहाकालानुयोगिकत्वयोः सत्त्वेन गगनत्वावच्छिन्नप्रतियोगिकत्व-महाकालानुयोगिकत्वोभया-

---

सत्त्वेन यद्धर्मपदेन साध्यतावच्छेदकस्य धर्तुमशक्यत्वादिति चेत् न ? संयोगेन द्रव्य-साधकद्रव्यत्वहेतावव्याप्तेः विभुद्वयसंयोगानभ्युपगमात् प्रतियोगिव्यधिकरणहेतुम-न्निष्ठाभावप्रतियोगितावच्छेदकीभूतावृत्तित्वे द्रव्यत्वविशिष्टस्य सम्बन्धिनि आकाश-कालदिगात्मनि तेन सम्बन्धेन प्रयियोगिव्यधिकरणो नावृत्त्यभावः किन्तु आत्माद्यभावः तत्प्रतियोगितानवच्छेदकत्वस्य सत्त्वेन यद्धर्मपदेन साध्यतावच्छेदकीभूतद्रव्यत्वस्यो-पादानसम्भवादिति ध्येयम् ।

परे तु निरुक्तप्रतियोग्यसम्बन्धिप्रकृतसाध्यवन्निष्ठाभावप्रतियोगितायां यद्यद्धर्मावच्छेद्यत्व-साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभावः प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणप्रकृतहेतुमन्निष्ठाभावप्रतियोगितासामान्येऽपि तादृशोभयाभावकूटवत्त्वं विवक्षितम् । अस्ति च समवायाद्यवच्छिन्नघटाद्यभावप्रतियोगितायां यत्कालिकसम्बन्धावच्छिन्नत्व-घटत्वावच्छिन्नत्वोभयाभाववत्त्वं तदेव प्रतियोग्यनधिकरणमहाकालनिष्ठाभावप्रतियोगितासामान्येऽपीति

---

भावस्यैव च तत्र सत्त्वात् तादृशप्रतियोगितावच्छेदकगगनत्वभिन्नघटत्वाद्यवच्छिन्नत्व तादात्म्यावच्छिन्नत्वयोः द्वयोरेव हेतुमन्निष्ठप्रतियोगिव्यधिकरणघटादिभेदीयतादात्म्यावच्छिन्नप्रतियोगितायां वर्त्तमानत्वादतः सम्बन्धपदम् । सामान्यपदानुपादाने धूमवान् वह्नेरित्यादावतिव्याप्तिः, पर्वतीयसंयोगे धूमत्वावच्छिन्नप्रतियोगिकत्व-साध्यसम्बन्धिमहानसानुयोगिकत्वोभयाभावस्यैव घटत्वाद्यवच्छिन्नप्रतियोगिकत्व-महानसाद्यनुयोगिकत्वोभयाभावस्यापि वर्त्तमानतया तादृशप्रतियोगितानवच्छेदकगोत्वत्वघटाभावत्वाद्यवच्छिन्नत्व-संयोगसम्बन्धावच्छिन्नत्वोभयाभावस्य हेतुमन्निष्ठाभावीयधूमनिष्ठप्रतियोगितायां सत्त्वाद् गुरुतया तादृशोभयत्वावच्छिन्नाभावाप्रसिद्ध्या यदि नातिव्याप्तिः तदा वह्निमान् धूमादित्यादौ उक्तक्रमेणोभयत्वावच्छिन्नाभावाऽप्रसिद्ध्याऽव्याप्तिः स्यादतः सामान्यपदम् ।

साध्यतावच्छेदकमनिवेश्य साध्यसम्बन्धिमात्रनिवेशे विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिः, समवायसम्बन्धे साध्यीभूतसत्तासम्बन्धिगुणाद्यनुयोगिकत्व-विशिष्टसत्ताद्रव्यत्वप्रतियोगिकत्वोभयाभावसत्त्वेन तादृशप्रतियोगितानवच्छेदकसत्तात्वावच्छिन्नत्व-समवायसम्बन्धावच्छिन्न-

---

ननु तथापि तादात्म्य-साध्यताघटकान्यतरीयतत्सम्बन्धेन यद्धर्मविशिष्टसम्बन्धित्वं तादृशान्यतरीयतत्तत्सम्बन्धेन प्रतियोगिवैयधिकरण्यं वाच्यम् , तावतैव रूपवान् पृथिवीत्वादित्यादौ नाव्याप्तिः, रूपत्वविशिष्टस्य तादात्म्येन सम्बन्धिनि रूपे तादात्म्येन रूपत्वद्रव्यान्यतराभावस्य समवायेनापि रूपवति पृथिव्यादौ समवायेन तादृशान्यतराभावस्य प्रतियोगिव्यधिकरणत्वात् इति चेन्न ? तथा सति सामानाधिकरण्यसम्बन्धेन घटभेदविशिष्टप्रमेयस्य स्वरूपेण साध्यतायां वाच्यत्वहेतावतिव्याप्तेः, हेतुमन्निष्ठाभाव-

त्वोभयाभावस्य जातिमद्गुणादिनिष्ठद्रव्यत्वाद्यभावप्रतियोगितायां सत्त्वात् । वह्निमान् धूमादित्यादौ संयोगसामान्ये अयोगोलकीयवह्नित्वावच्छिन्नप्रतियोगिकत्वायोगोलकानुयोगिकत्वयोः सत्त्वेन अयोगोलकीयवह्नित्वस्य तादृशप्रतियोगितानवच्छेदकगगनत्वभिन्नायोगोलकीयवह्नित्वावच्छिन्नत्व-संयोगावच्छिन्नत्वयोः हेतुमन्निष्ठायोगोलकीयवह्न्यभावीयप्रतियोगितायां सत्त्वादव्याप्तिरतः साध्यसम्बन्धिनि यत्किञ्चित्त्वनिवेशः, तथा सति पर्वतानुयोगिकत्वायोगोलकीयवह्निप्रतियोगित्वयोः संयोगसामान्ये विरहात् यादृशप्रतियोगितावच्छेदकपदेनायोगलकीयवह्नित्वस्यापि धर्तुं शक्यतया नाव्याप्तिः ।

प्रतियोगिकत्वानुयोगिकत्वसामान्योभयाभावोऽपि विवक्षणीयः, तेन संयोगसामान्य एव समवायनिष्ठवह्निसम्बन्धिपर्वतानुयोगिकत्व-वह्नित्वावच्छिन्नप्रतियोगिकत्वयोः पर्वताद्यनुयोगिकत्वसमवायनिष्ठवह्नित्वावच्छिन्नप्रतियोगिकत्वयोश्चाभावसत्त्वेन सर्वस्यैव वह्नित्वादेः यादृशप्रतियोगितावच्छेदकपदेन धर्तुं शक्यतया तादृशप्रतियोगितानवच्छेदकगोत्वत्वाद्यवच्छिन्नत्वघटितोभयत्वावच्छिन्नाभावाऽप्रसिद्धेरिति ध्येयम् । यदभावप्रतियोगित्वाश्रयप्रतियोगिकत्वनिवेशे सत्तावान् जातेरित्यादावव्याप्तिः, समवायसम्बन्धे विशिष्टसत्ताभावीयप्रतियोगित्वसत्तासम्बन्धिगुणाद्यनुयोगिकत्वयोः सत्त्वेन विशिष्टसत्तात्वस्य तादृशघटनिष्ठप्रतियोगितावच्छेदकतया तदवच्छिन्नत्व-समवायावच्छिन्नत्वयोर्द्वयोरेव हेतुमन्निष्ठविशिष्टसत्ताभावीयप्रतियोगितायां सत्त्वादिति दिक् ।

समाधत्ते स्वरूपसम्बन्धेनेति । कालिकसम्बन्धेनेत्यर्थः । तत्र = प्रतियोगिताधर्मिकोभयाभावघटितलक्षणे । अव्याप्तिमुपपादयति कालिकेति । कालिकसम्बन्धसामान्ये इत्यर्थः । न च गगनादेः कालिकसम्बन्धेन वृत्तिमत्त्वेऽपि साध्यप्रतियोगिकसाध्यतावच्छेदकसम्बन्धसामान्ये साध्यसम्बन्धियत्किञ्चिद्व्यक्त्यनुयोगिकत्व-यादृशप्रतियोगितावच्छेदकधर्मावच्छिन्नप्रतियोगिकत्वोभयाभावस्तादृशप्रतियोगितानवच्छेदकधर्मावच्छि-

प्रतियोगितावच्छेदकस्य घटभेदत्वस्य तादात्म्येन घटभेदविशिष्टप्रमेयत्ववति वाच्यत्वे तेनैव सम्बन्धेन वर्त्तमानो यः प्रतियोगिव्यधिकरणाभावस्तत्प्रतियोगितावच्छेदकत्वेन साध्यतावच्छेदकस्य यद्धर्मपदेन धर्त्तुमशक्यत्वात् ।

न्नत्वघटितोभयाभावस्य हेतुसमानाधिकरणतादृशाभावप्रतियोगितासामान्ये निवेशनेनैव घटवान् महाकालत्वादित्यादौ नाव्याप्तिः, घटप्रतियोगिक-कालिकसम्बन्धेन पटत्वावच्छिन्नप्रतियोगिकत्वविरहेण पटाद्यभावस्यैव तादृशस्य लक्षणघटकत्वसम्भवात्, प्रमेयवान् महाकालत्वादित्यादौ च प्रमेयस्य व्याप्यवृत्तितया साध्यसम्बन्धिनिष्ठाभावे प्रतियोगिवैयधिकरण्य-निवेशादेव नाव्याप्तिरिति वाच्यम् ? समवायस्यैकत्वमते सत्तावान् जातेरित्यादावव्याप्त्यापत्तेः, सत्तासमवाये विशिष्टसत्तात्वावच्छिन्नप्रति-योगिकत्व-सत्तासम्बन्धिगुणाद्यनुयोगिकत्वोभयोः सत्त्वेन विशिष्टसत्तात्वस्य यादृशप्रतियोगितावच्छेदकपदे धर्तुमशक्यतया तादृशप्रतियोगितावच्छेद-कगगनत्वादिभिन्नविशिष्टसत्तात्वावच्छिन्नत्व-समवायावच्छिन्नत्वोभयोः साधनवन्निष्ठविशिष्टसत्ताभावप्रतियोगितायां सत्त्वादिति ध्येयम्।

नन्वित्यादिशंकायाः समाधानं एतदस्वरसेनैवेति। घटवान् महा-काळत्वादित्यादावव्याप्तिरूपदोषेणैवेत्यर्थः। लक्षणान्तरमिति। तथा च वक्ष्यमाणलक्षणे न कुत्राप्यव्याप्तिः सम्भवतीति हृदयम्। वक्ष्यत इति। दीधिकार इति शेषः। अत्रैके इत्युक्त्वाऽस्वरसः सूचितः, तद्बीजन्तु साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नसम्बन्धिता-सामान्ये साध्यसम्बन्धियत्किञ्चिद्व्यक्तिवृत्तित्व-यादृशप्रतियोगिताव-च्छेदकावच्छिन्नसम्बद्धतानिरूपितत्वोभयाभावस्तादृशप्रतियोगितानवच्छे-दकधर्मावच्छिन्नत्व-साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभावस्य हेतु-मन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितासामान्ये विवक्षणादेव घट-वान् महाकालत्वादित्यादौ पटाभावमादायैवाव्याप्तिवारणसम्भवे निरुक्ताव्याप्तिरूपास्वरसेन लक्षणान्तराभिधानमयुक्तमिति।

प्रकारान्तरेण घटवान् महाकालत्वादित्यादावव्याप्तिं वारयतां केषाञ्चिन्मतमाह परे त्विति। निरुक्तेति। प्रतियोगितावच्छेदकसम्ब-न्धेन प्रतियोगितावच्छेदकावच्छिन्नाऽसम्बन्धी यः साध्यतावच्छेदका-वच्छिन्नसम्बन्धी तन्निष्ठाभावीयप्रतियोगितासामान्ये इत्यर्थः। तेन वह्निमन्निष्ठतादृशपटाभावीययत्किञ्चित्पटनिष्ठायां प्रतियोगितायां यद्

ननु तथापि स्वरूपसम्बन्धावच्छिन्नाधेयत्वसाध्यताघटकान्यतरसम्बन्धेन यद्धर्म-विशिष्टसम्बन्धिनिष्ठतत्सम्बन्धेन प्रतियोगिव्यधिकरणाभावस्य वक्तव्यतया न रूपवान्

घटवान् महाकालत्वादित्यादौ नाव्याप्तिः । यद्यदिति वीप्सादरात् निरुक्तप-

यद् यटत्ववह्नित्वादिधर्मावच्छिन्नत्व - संयोगावच्छिन्नत्वोभयाभावसत्त्वेन हेतुमन्निष्ठाभावीयप्रतियोगितासामान्यान्तर्गतायां घटनिष्ठप्रतियोगितायां घटत्वावच्छिन्नत्वघटितोभयाभावविरहेऽपि न वह्निमान् धूमादित्यादावव्याप्तिः । यद्यद्धर्मावच्छिन्नत्वाभावमात्रनिवेशे धूमवान् वह्नेरित्यादावतिव्याप्तिः, धूमवन्निष्ठसमवायावच्छिन्नधूमाद्यभावप्रतियोगितायां धूमत्वघटत्वाद्यवच्छिन्नत्वस्य सत्त्वेन यद्यद्धर्मान्तर्गतगगनत्वगुणत्वाद्यवच्छिन्नत्वाभावसत्त्वात् हेतुमन्निष्ठाभावीयसंयोगावच्छिन्नधूमनिष्ठप्रतियोगितायामपि तादृशगगनत्वाद्यवच्छिन्नत्व-संयोगसम्बन्धावच्छिन्नत्वोभयाभावस्य वर्त्तमानत्वादतस्तादृशोभयाभावनिवेशः । न चैवमपि साध्यवन्निष्ठतादृशाभावीययद्धर्मावच्छिन्नसाध्यनिष्ठप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाभावः हेतुमन्निष्ठाभावीयप्रतियोगितासामान्येऽपि तद्धर्मावच्छिन्नत्व-साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभावः लाघवादेव विवक्षणीयः, तावतैव घटवान् महाकालत्वादित्यत्र समवायाद्यवच्छिन्नघटाभावमादाय नाव्याप्तिः सम्भवतीति वाच्यम् ? घटवृत्तित्वविशिष्टद्रव्यत्ववान् घटत्वादित्यादावव्याप्त्यापत्तेः, केनापि सम्बन्धेन साध्याभावस्य यथोक्तप्रतियोगिव्यधिकरणस्य साध्यवत्यसत्त्वादित्यादिदोषस्य सिद्धान्तलक्षण एव स्वयमुक्तत्वादिति ध्येयम् ।

घटवान् महाकालत्वादित्यादौ निरुक्तलक्षणसमन्वयं प्रदर्शयति **अस्ति चेति** । तदेव = कालिकसम्बन्धावच्छिन्नत्व-घटत्वाद्यवच्छिन्नत्वोभयाभाववत्त्वमेव । **नाव्याप्तिरिति** । इदमुपलक्षणम्, वह्निमान् धूमादित्यादावपि वह्निमन्निष्ठतादृशाभावीयसंयोगावच्छिन्नघटनिष्ठप्रतियोगितायां वह्नित्वाद्यवच्छिन्नत्व–वह्निप्रतियोगिकसंयोगसम्बन्धावच्छिन्नत्वोभयाभाववत्त्वं तदेव हेतुमन्निष्ठतादृशघटाद्यभावप्रतियोगितायां वर्त्तमानमित्यादिरीत्याऽन्यत्रापि च लक्षणसमन्वयो बोध्यः । यद्यदितिवीप्सादर एवाप्रिमोभयाभावकूटवत्त्वविवक्षणं सार्थकं भवतीत्यतो वीप्सादरप्रयोजनमाह **यद्यदिति** । वीप्सानादरे धूमवान् वह्नेरित्यत्राऽतिव्याप्तिः, धूमवति

१ पृथिवीत्वादित्यत्राव्याप्तिः, निरुक्तान्यतरसम्बन्धेन रूपत्वविशिष्टस्य सम्बन्धिनि रूपनिष्ठ-

तियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितासामान्ये एव गुणत्वावच्छेद्यत्व-संयोगसम्बन्धावच्छेद्यत्वोभयाभावसत्त्वेऽपि धूमवान् वह्नेरित्यादौ नातिव्याप्तिः। धूमत्वावच्छेद्यत्वसंयोगसम्बन्धावच्छेद्यत्वोभयाभावस्यापि तादृशत्वेन तस्यैव प्रतियोग्यनधिकरणवह्निमन्निष्ठाभावप्रतियोगितासामान्ये विरहात्, संयोग-सम्बन्धावच्छिन्नधूमाभावप्रतियोगितायां तदसत्त्वादित्याहुः।

---

संयोगेन गुणाद्यभावस्य यथोक्तप्रतियोगिव्यधिकरणत्वाऽसम्भवात् तत्र वर्त्तमानस्य तादृशघटाद्यभावीयसंयोगसम्बन्धावच्छिन्नप्रतियोगितायां गुण-त्वावच्छिन्नत्व-संयोगसम्बन्धावच्छिन्नत्वोभयाभावस्यावश्यं वर्त्तमानतया तस्यैव हेतुमन्निष्ठतादृशधूमाभावीयसंयोगावच्छिन्नधूमनिष्ठप्रतियोगिता-यामपि सत्त्वात्। वीप्सादरे तु न तत्राऽतिव्याप्तिः, धूमवन्निष्ठाभावीयघट-निष्ठप्रतियोगितायां गुणत्वावच्छिन्नत्वघटितोभयाभावस्येव यद्यदन्तर्गत-धूमत्वावच्छिन्नत्वघटितोभयाभावस्यापि सत्त्वात् तस्य च हेतुमन्निष्ठ संयोगावच्छिन्नधूमाभावीयप्रतियोगितायामसत्त्वादित्याह हेतुमन्निष्ठेति। अतिव्याप्त्यभावे हेतुमाह धूमत्वेति। तादृशत्वेन=यद्यद्धर्मावच्छि-न्नत्वघटितोभयाभावमध्यान्तर्गतत्वेन। तस्यैव=धूमत्वावच्छिन्नत्वघटितो-भयाभावस्यैव। तदसत्त्वात्=धूमत्वावच्छिन्नत्व-संयोगसम्बन्धावच्छिन्न-त्वोभयाभावस्यासत्त्वात्, तथा च नातिव्याप्तिरिति भावः।

अत्र कल्पे वृत्त्यनियामकस्वामित्वसम्बन्धेन धनसाध्यकचैत्रत्वहेता-वव्याप्तिः प्रतियोगितानिष्ठस्य स्वामित्वसम्बन्धावच्छिन्नत्वस्याप्रसिद्धतया तदभावस्य साध्यवन्निष्ठाभावप्रतियोगितायां वक्तुमशक्यत्वात्। न चात्रापि प्रतियोगितावच्छेदकताघटकसम्बन्धेन यादृशप्रतियोगितावच्छेदकास-म्बन्धी यः साध्यसम्बन्धी तन्निष्ठाभावीयप्रतियोगितायां यद्यद्धर्मा-वच्छिन्नावच्छेदकताकत्व-साध्यतावच्छेदकसम्बन्धावच्छिन्नावच्छेदकता-

---

तत्तद्व्यक्तित्वादौ निरुक्तसम्बन्धेन रूपत्वद्रव्यान्यतराभावस्य प्रतियोगिव्यधिकरणतया तत्प्रतियोगितावच्छेदकत्वस्यैव रूपत्वद्रव्यान्यतरत्वे सत्त्वेन यद्धर्मपदेन रूपत्वस्योपादातु-मशक्यत्वादिति चेन्न ? किमत्र तादृशान्यतरीयवत्सम्बन्धेन यद्धर्मविशिष्टसम्बन्धित्वं तत्सम्बन्धेन प्रतियोगिवैयधिकरण्यं वाच्यमुत वा यथाश्रुत ? आद्ये घटभेदविशिष्ट-वाच्यस्य साध्यत्वे वाच्यत्वहेतावतिव्याप्त्यापत्तेः, हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं

कत्वोभयाभावः हेतुमन्निष्ठप्रतियोगिव्यधिकरणाभावीयप्रतियोगितासामान्येऽपि तत्तद्धर्मावच्छिन्नत्व-साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभाव एव विवक्षणीयः, तथा च तत्र नाव्याप्तिः, वृत्त्यनियामकसम्बन्धावच्छिन्नावच्छेदकतायाः सर्वसम्मतत्वात् वह्निमान् धूमादित्यादावपि साध्यवति समवायादिना वह्न्यादिमत्सामान्याभावमादायैव लक्षणसमन्वयः सम्भवतीति वाच्यम् ? तथासति व्यभिचारिमात्रेऽव्याप्तिवारणाय वृत्त्यनियामकसम्बन्धेन धनादिसाध्यकसद्धेतावव्याप्तिवारणाय च प्रतियोगिताधर्मिकोभयाभावस्यापि सिद्धान्तलक्षणीययद्वाकल्पोक्तरीत्याऽवश्यं वक्तव्यतया गौरवापत्तेरित्यस्वरसः आहुरित्यनेन सूचित इति वदन्ति ।

हेतुसमानाधिकरणप्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसम्बन्धिनिष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकं स धर्मः पारिभाषिकावच्छेदक इत्यादिपूर्वोक्तपरिभाषिकावच्छेदकत्वलक्षणघटकयद्धर्मविशिष्टसम्बन्धिनिष्ठतादृशाभावप्रतियोगितानवच्छेदकत्वमवश्यं तादृशावच्छेदकत्वावच्छिन्नप्रतियोगिताकभेदरूपं वाच्यम् न तु तादृशावच्छेदकनिष्ठप्रतियोगिताकभेदमात्रं, तथासति वह्निमान् धूमादित्यादौ सर्वत्रासम्भवः स्यात् हेतुमन्निष्ठतादृशाभावप्रतियोगितावच्छेदकघटत्वादेः वह्नित्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकपटत्वादिव्यक्तिभिन्नत्वेन यद्धर्मपदेन वह्नित्वादिसाध्यतावच्छेदकमात्रस्योपादानसम्भवात् , एवं हेतुमन्निष्ठतादृशाभावीयप्रतियोगितासामान्ये साध्यतावच्छेदकयद्धर्मविशिष्टसम्बन्धिनिष्ठतादृशाभावप्रतियोगितानवच्छेदकधर्मावच्छिन्नत्व-साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभाव इत्यादिप्रतियोगिताधर्मिकोभयाभावघटितलक्षणघटकं साध्यतावच्छेदकविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वमपि तादृशप्रतियोगितावच्छेदकत्वावच्छिन्नप्रतियोगिताकभेद एव न तु तादृशप्रतियोगितावच्छेदकनिष्ठप्रतियोगिताकभेदः तथा सत्यप्यसम्भवापत्तिः स्यात् ,वह्नित्वादिविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकपटत्वादिव्यक्तिनिष्ठप्रतियोगिताकभेदस्य घटत्वादौ सत्त्वात् तादृशघटत्वाद्यवच्छिन्नत्व-संयोगाव-

---

यद्घटभेदत्वं तस्य स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धेन घटभेदविशिष्टवाच्यत्वत्वविशिष्टवाच्यत्ववति वाच्यत्वत्वे तादृशसम्बन्धेन प्रतियोगिव्यधिकरणस्य घटभेदाभावस्य प्रतियोगितावच्छेदकतया यद्धर्मपदेन साध्यतावच्छेदकस्य धर्तुमशक्यत्वात् ।

तादृशप्रतियोगिताश्च विशिष्योपादेयाः, नातो गुरोरवच्छेदकत्वं विना दुर्व्वचत्वं प्रतियोगित्वस्य ।

ननु स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकेत्यत्रानवच्छेदकत्वं न तादृशावच्छेदकप्रतियोगिकभेदमात्रम्, धर्ममात्रस्यैव तादृशयत्किञ्चिदवच्छेदकभिन्नत्वेन व्याप्तिलक्षणासम्भवप्रसङ्गात्, किं तु तादृशप्रतियोगितावच्छेदकत्वावच्छिन्नप्रतियोगिताको भेदः, तथा चावच्छेदकत्वगर्भाया निरुक्तेः प्रमेयधूमवान् वह्नेरित्यादावतिव्याप्तिः । अवच्छेद्यत्वगर्भा-

च्छिन्नत्वयोर्द्वयोरेव हेतुमन्निष्ठघटाभावीयप्रतियोगितायामक्षतत्वात् । तथा च पारिभाषिकावच्छेदकत्वलक्षणे प्रमेयधूमवान् वह्नेरित्यादावतिव्याप्तिः, प्रमेयधूमत्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वापेक्षया धूमत्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वस्य लघुतया प्रमेयधूमत्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वावच्छिन्नप्रतियोगिताकभेदाऽप्रसिद्धेः यद्धर्मपदेन प्रमेयधूमत्वस्य धर्त्तुमशक्यत्वात् । प्रतियोगिताधर्मिकोभयाभावघटितलक्षणे तु प्रमेयवह्निमान् धूमादित्यादावव्याप्तिः, प्रमेयवह्नित्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकभेदप्रतियोगितावच्छेदकताया लाघवेन वह्नित्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्व एव स्वीकरणीयतया प्रमेयवह्नित्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वावच्छिन्नप्रतियोगिताकभेदाप्रसिद्धेः, साध्यतावच्छेदकप्रमेयवह्नित्वावच्छिन्नस्य हेतुव्यापकत्वानुपपत्तेरित्येवं बीजं प्रदर्शयन् तादृशप्रतियोगिताश्चेत्यादि दीधितिमवतारयति नन्विति ।

इत्यत्र = एतद्घटकीभूतम् । तादृशयत्किञ्चिदिति । स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकपटत्वादिव्यक्तिभिन्नत्वेनेत्यर्थः ।

यथाश्रुताभिप्राये तु वाच्यत्वमात्रवृत्तिधर्मभिन्नानुयोगिकस्वरूपसम्बन्धेन घटभेदविशिष्टवाच्यत्वस्य साध्यत्वे वाच्यत्वहेतावतिव्याप्तेः, स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धेन घटभेदविशिष्टवाच्यत्वत्वविशिष्टवति वाच्यत्वत्वे तादृशान्यतरसम्बन्धेन साध्याभावप्रतियोगितावच्छेदकघटभेदत्वाद्यवच्छिन्नाभावस्य प्रतियोगिव्यधिकरणतया

यास्तु प्रमेयवह्निमान् धूमादित्यादावव्याप्तिः, प्रमेयवह्नित्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकवृत्तिप्रतियोगिताया लाघवेन वह्निमन्निष्ठाभावप्रतियोगितावच्छेदकत्वेनैवावच्छेदादत आह **प्रतियोगिताश्चेति** । तादृशावच्छेदकनिष्ठप्रतियोगिताव्यक्तयो विशेष्य तत्तदवच्छेदकत्वावच्छिन्नत्वेन प्रवेशनीयाः, न तु अनुगततादृशावच्छेदकत्वावच्छिन्नत्वेन; यतो गुरुधर्मस्यानवच्छेदकत्वे व्याप्तेर्दुर्वचत्वं स्यादित्यर्थः ।

---

अतिव्याप्तिमव्याप्तिञ्च संगमयति **प्रमेयवह्नित्वेति** । अत आह = अतिव्याप्तेरव्याप्तेश्च वारणायाह **तादृशेति** । यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकनिष्ठप्रतियोगिताव्यक्तयः साध्यतावच्छेदकविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकनिष्ठप्रतियोगिताव्यक्तयश्चेत्यर्थः । **प्रवेशनीया इति** । तथा च न पूर्वोक्तासम्भवः, वह्नित्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानिरूपिततत्तदवच्छेदकत्वान्तर्गतघटत्वादिनिष्ठावच्छेदकत्वावच्छिन्नभेदस्य घटत्वादौ विरहेण घटत्वादेः स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वेन धर्त्तुमशक्यत्वात् । न वा पूर्वोक्तातिव्याप्तिरव्याप्तिर्वा प्रमेयधूमत्वादिविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वापेक्षयापि लघुत्वेन अतिप्रसंगाद्यनापादकत्वेन च तदवच्छिन्नभेदप्रसिद्धेः । न च धूमत्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानिरूपिततत्तदवच्छेदकत्वमेव प्रमेयधूमत्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानिरूपिततत्तदवच्छेदकभेदप्रतियोगितावच्छेदकमिति वाच्यम् ? विनिगमकाभावेन प्रमेयधूमत्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानिरूपिततत्तदवच्छेदकत्वस्यापि तादृशभेदप्रतियोगितावच्छेदकत्वसम्भवादिति भावः ।

**न तु अनुगतेति** । न तु भेदीयप्रतियोगितानुगतस्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वावच्छिन्ना वाच्येत्यर्थः । **गुरुधर्मस्य** =

---

साध्यतावच्छेदकस्य पारिभाषिकावच्छेदकत्वविरहात् । घटाधिकरणतात्वादेः तादृशान्यतरसम्बन्धेन स्वविशिष्टसम्बन्धिनि भूतले तादृशान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणघटाधिकरणत्वाभावप्रतियोगितानवच्छेदकतया पारिभाषिकावच्छेदकप्रसिद्धेरित्युभयथा दोषमाशंक्य कल्पोऽयं परित्यक्त इत्यस्मद्गुरुचरणाः ।

स्वविशिष्टसम्बन्धिनिष्ठाभावीयप्रतियोगिताव्यक्तीर्विशिष्योपादाय तत्त-त्प्रतियोगितावच्छेदकत्वावच्छिन्नभेदकूटवत्त्वं निवेशनीयमिति तु अपव्याख्या-नम् । तत्तत्प्रतियोगिताविशेषितावच्छेदकत्वव्यक्तीनां वास्तविकतत्तदवच्छे-दकत्वव्यक्तीरपेक्ष्य गुरुत्वेन तत्प्रतियोगितानिरूपितावच्छेदकत्वावच्छि-न्नभेदानामप्यप्रसिद्धया दुर्वचत्वतादवस्थ्यात् । यदि च समनियतनानाधर्मा-

---

प्रमेयधूमत्वादिविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वस्य । अन-वच्छेदकत्वेन स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकभेद-प्रतियोगितानवच्छेदकत्वेन । व्याप्तेरित्यादि । अतिव्याप्त्यव्याप्त्यादि-दोषेणेत्यादिः ।

ननु तादृशप्रतियोगितापदेन स्वविशिष्टसम्बन्धिनिष्ठाभावीयप्रतियो-गिताव्यक्तय एव यथाश्रुतशब्दलभ्यास्तथा च तत्तत्प्रतियोगितावच्छेदक-त्वावच्छिन्नभेदकूटनिवेशेऽपि न पूर्वोक्तदोषाणामवकाश इत्यत आह स्वविशिष्टेति । साध्यतावच्छेदकीभूतप्रमेयधूमत्वादिविशिष्टेत्यर्थकम् । अपव्याख्यानमिति । तत्तत्प्रतियोगितावच्छेदकत्वावच्छिन्नभेदकूटनिवे-शेऽपि अतिव्याप्त्यादेर्वारणं न सम्भवतीति हृदयम् । कुत इत्याकांक्षायामाह तत्तदिति । निरूपितत्वसम्बन्धेनेत्यादिः । तथा च निरूपितत्वसम्बन्धेन प्रमेयधूमत्वादिविशिष्टसम्बन्धिनिष्ठाभावीयतत्तत्प्रतियोगिताविशेषितावच्छे-दकं नेत्याकारकभेदीयप्रतियोगितावच्छेदकं तु धूमत्वविशिष्टसम्बन्धि-निष्ठाभावीयप्रतियोगितानिरूपिततत्तदवच्छेदकत्वमेव लाघवादतिप्रसङ्गाद्य-नापादकत्वाच्च, एवञ्च तादृशतत्तत्प्रतियोगिताविशिष्टावच्छेदकत्वावच्छिन्न-प्रतियोगिताकभेदस्याप्यप्रसिद्धया प्रमेयधूमवान् वह्नेरित्यादावतिव्याप्तेः प्रमेयवह्निमान् धूमादित्यादावव्याप्तेश्च वारणं न सम्भवतीति भावः ।

यदि चेति । अस्य तु मानाभाव इत्यनेन सम्बन्धः । प्रतियोगिता-वच्छेदकभेदेनैव प्रतियोगिताव्यक्तीनां भेदस्य पूर्वमभिहिततया तादृशा-

---

केचित्तु वाच्यत्ववान् घटाभावत्वादित्यत्राव्याप्तिः, हेतुमन्निष्ठाभावप्रतियोगिता-वच्छेदकस्य घटाभावभेदत्वस्य, वाच्यत्वत्वविशिष्टस्य तादृशान्यतरसम्बन्धेन सम्बन्धिनि तादृशान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणो न घटाभावभेदाभावस्तत्प्रतियोगिनो घटा-

वच्छिन्नप्रतियोगित्वस्य भेदे मानाभावस्तदा तत्तत्प्रतियोगितावच्छेदकत्वा-
वच्छिन्नभेदकूटस्य प्रवेशोऽपि न क्षतिः, तत्तत्प्रतियोगितावच्छेदकत्वस्य
तत्तदवच्छेदकत्वसमनैयत्याभावेन गुरुत्वस्याकिञ्चित्करत्वादिति ध्येयम् ।

---

वच्छेदकधर्मयोः समनियतत्वेऽपि तत्तद्धर्मावच्छिन्नप्रतियोगितानामैक्यं न सम्भवति, अन्यथा द्रव्यभेदगुणवद्भेदप्रतियोगित्वयोरप्यैक्यप्रसङ्गः स्यात्, अत्र तु निरवच्छिन्नावच्छेदकताकत्वेन किञ्चिदवच्छिन्नावच्छेदकताकत्वेन प्रतियोगितयोर्भेदस्यावश्यकत्वादित्याशयेनोक्तं यदिचेतीति ध्येयम् । **समनियतेति** परस्परव्याप्यव्यापकीभूतविभिन्नधर्मावच्छिन्न प्रतियोगित्वव्यक्तीनामित्यर्थः । **तादृशेति** स्वविशिष्टसम्बन्धिनिष्ठाभावीयतत्तत्प्रतियोगिताविशिष्टावच्छेदकत्वावच्छिन्नप्रतियोगिताकभेदकूटस्येत्यर्थः । न क्षतिः=नातिव्याप्तयव्याप्त्यादिदोषः । **तादृशेति** पूर्वोक्तार्थकम् । **तत्तदवच्छेदकत्वेति** तत्तदवच्छेदकत्वस्य अतिप्रसङ्गाद्यापादकत्वेनेत्यर्थः ।

**अकिञ्चित्करत्वादिति ।** अयमाशयः, यथा संख्यावान्न परिमाणवान्नेत्याकारकभेदप्रतियोगितावच्छेदकधर्मयोः संख्यापरिमाणयोः परस्परं विभिन्नत्वेऽपि तयोः परस्परं समनियततया तत्तद्धर्मावच्छिन्नप्रतियोगित्वमेकमेव न तु विभिन्नं तथा च तत्प्रतियोगितावच्छेदकं यदि तदवच्छेदकत्वं स्यात् तदा संख्यादावपि तत्प्रतियोगितावच्छेदकं नेत्याकारकभेदप्रत्ययः स्यात्, निरुक्तभेदप्रतियोगितावच्छेदकस्य तदवच्छेदकत्वस्य केवल परिमाणादिनिष्ठत्वात् तत्प्रतियोगितावच्छेदकत्वस्य चोभयधर्मसाधारणत्वात् इति संख्याद्यवच्छिन्नप्रतियोगितावच्छेदकं तथाविधप्रतियोगिताविशिष्टावच्छेदकत्वमेव भवति तथा प्रमेयधूमत्वादिविशिष्टसम्बन्धिनिष्ठाभावीयतत्तत्प्रतियोगिताविशिष्टावच्छेदकभेदप्रतियोगितावच्छेदकमपि तादृशतत्तत्प्रतियोगिताविशिष्टावच्छेदकत्वमेव न तु तादृशप्रतियोगितानिरूपिततत्तदवच्छेदकत्वं, तथा सति तदवच्छेदकत्वस्य प्रत्येकघटत्वादिनिष्ठ-

---

भावभेदस्य स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धेन घटाभावे अन्यत्र च सत्त्वात्, किन्तु अभावान्तर एव तत्प्रतियोगितानवच्छेदकत्वात् यद्धर्मपदेन वाच्यत्वस्य वक्तुं शक्यत्वादित्याहुः ।

प्रतियोगित्वं सम्बन्धित्वं च साध्यतावच्छेदकसम्बन्धेन बोध्यम्, अतो न सम्बन्धभेदमादाय दोषः। अभावश्च प्रतियोगि-

सम्बन्धभेदमिति इदं च प्रागेव निरुक्तव्याख्यायां प्रपञ्चितम्। ननु प्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितायाः संयोगत्वावच्छेद्यत्वेऽपि संयोगत्वस्य स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वाभावात् संयोगी सत्त्वादित्यत्रातिव्याप्तिरत आह अभावश्चेति। निरुक्तित्रयेऽपीति

तथा घटत्वादावपि तादृशप्रतियोगिताविशिष्टावच्छेदकभेदप्रत्ययः स्यादि-त्यकामेनापि तत्तत्प्रतियोगिताविशिष्टावच्छेदकत्वस्य तदवच्छेदकत्वापेक्षया गुरुत्वेऽपि प्रमेयधूमादिमन्निष्ठाभावीयतत्तत्प्रतियोगिताविशिष्टावच्छेदक-भेदप्रतियोगितावच्छेदकत्वमवश्यं कल्पनीयमिति।

साध्यतावच्छेदकविशिष्टसम्बन्धिनिष्ठाभावीयप्रतियोगितायां साध्यता-वच्छेदकसम्बन्धावच्छिन्नत्वनिवेशस्य साध्यतावच्छेदकसम्बन्धेन साध्य-सम्बन्धित्वनिवेशस्य च प्रयोजनं पूर्वमेवाभिहितमित्यत आहेदञ्चेति। सम्बन्धित्वादेः सम्बन्धविशेषेण निवेशनप्रयोजनञ्चेत्यर्थः। निरुक्तव्या-ख्यायां = लक्षणव्याख्यायाम्। प्रपञ्चितमिति। अस्माभिरिति शेषः।

संयोगी सत्त्वादित्यादौ प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभा-वीयसंयोगनिष्ठायां प्रतियोगितायां साध्यसम्बन्धिनिष्ठसंयोगाभावप्रतियोगि-तानवच्छेदकद्रव्यत्वत्वावच्छिन्नत्वघटितोभयाभावसत्त्वात् अतिव्याप्तिरतः साध्यवन्निष्ठाभावोऽपि प्रतियोगिव्यधिकरणो वाच्य इत्याह नन्वित्यादि। पारिभाषिकावच्छेदकत्वलक्षणद्वयघटकाभावोऽपि प्रतियोगिव्यधिकरण एवेत्याह निरुक्तेति। प्रतियोगिवैयधिकरण्यनिवेशे न संयोगी सत्त्वादित्य-त्रातिव्याप्तिः, संयोगत्वविशिष्टसम्बन्धिनि संयोगाभावो न प्रतियोगिव्यधि-करणः किन्तु घटाद्यभाव एव, तत्प्रतियोगितानवच्छेदकसंयोगत्वावच्छि-न्नत्वघटितोभयाभावस्य हेतुमन्निष्ठाभावीयसंयोगनिष्ठप्रतियोगितायामस-

ननु तथापि रूपवान् पृथिवीत्वादित्यादौ नाव्याप्तिः, हेतुमन्निष्ठाभावप्रतियोगि तावच्छेदकं यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकं सत् यद्धर्मसमा-

ऽव्यधिकरणो बोध्यः । कालिकविशेषणताविशेषेण च साध्यतायां तादृशप्रतियोगितावच्छेदकत्वमनित्यतत्तद्व्यक्तित्वे प्रसिद्धम् ।

---

शेषः । तथा च निरुक्तप्रतियोग्यनधिकरणस्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वं संयोगत्वेऽप्यक्षतमिति हेतुमन्निष्ठाभावप्रतियोगितायाः तदवच्छेद्यत्व देव नातिव्याप्तिरिति भावः । नन्वेवं गोमान् महाकालत्वादित्यत्राव्याप्तिः, गोत्वविशिष्टसम्बन्धिनिष्ठस्याभावमात्रस्यैव साध्यताघटककालिकसम्बन्धेन प्रतियोगिसमानाधिकरणतया स्वविशिष्टसम्बन्धिनिष्ठप्रतियोग्यसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाप्रसिद्धेरत आह कालिकेति ।

---

त्वादिति भावमाह तथा चेति । यद्यपि संयोगी सत्त्वादित्यादौ हेतुमन्निष्ठाभावप्रतियोगितासामान्यान्तर्गतायां द्रव्यत्वनिष्ठप्रतियोगितायां साध्यीभूतसंयोगवन्निष्ठाभावप्रतियोगितानवच्छेदकद्रव्यत्वत्वावच्छिन्नत्वघटितोभयाभावविरहान्नातिव्याप्तिरिति प्रतियोगिवैयधिकरण्यनिवेशव्यावृत्तिर्न सङ्गच्छते, तथापि पूर्ववत् वह्निमान् धूमादित्यादौ संयोगेन वस्तुमात्रस्याव्याप्यवृत्तितया वह्निमन्निष्ठाभावीयप्रतियोगितानवच्छेदकगोत्वत्वाद्यवच्छिन्नत्वघटितोभयत्वस्य गुरुतया तदवच्छिन्नाभावाप्रसिद्धयाऽव्याप्तिः स्यात् यदि प्रतियोग्यसम्बन्धित्वं साध्यसम्बन्धिविशेषणं न स्यादिति बोध्यम् ।

एवम् = प्रतियोगिवैयधिकरण्यविवक्षणे । अव्याप्तिं संगमयति गोत्वविशिष्टेति । तथा च साध्यसम्बन्धिनि महाकाले वस्तुमात्रस्यैव कालिकसम्बन्धेन वर्त्तमानतया तेन सम्बन्धेन प्रतियोग्यसम्बन्धिसाध्यसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकस्याप्रसिद्धया तादृशप्रतियोगितानवच्छेदकस्याप्यप्रसिद्धेर्भवति कालिकेन गोसाध्यकमहाकालत्वहेतावव्याप्तिरिति तात्पर्यम् । न केवलं कालिकसम्बन्धेन गोसम्बन्धित्वं महाकाल एव

---

नाधिकरणं तद्धर्मस्यैव पारिभाषिकावच्छेदकत्वविवक्षणात् रूपत्वद्रव्यान्यतरत्वस्य रूपत्वाऽसमानाधिकरणत्वादिति चेन्न ? रूपत्वद्रव्यनीलान्यतमाभावमादाय तत्रैवाऽव्याप्तेः, तादृशान्यतमत्वस्य रूपत्वसमानाधिकरणत्वात् ।

तथा च स्वावच्छिन्नानधिकरणसाध्यवत्खण्डकालनिष्ठाभावप्रतियोगितावच्छेदकतयैव तद्व्यक्तित्वे निरुक्तावच्छेदकत्वं सुलभमिति भावः ।

ननु हेतुमन्निष्ठाभावीयसंयोगसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकमात्रस्यैव घटत्वादिविशिष्टसम्बन्धिनिष्ठाभावीयसंयोगसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वात्पारिभाषिकावच्छेदकाप्रसिद्ध्या वह्निमान्धूमादित्यादावव्याप्तिवारकं द्वितीयनिरुक्तावभावे प्रतियोगिवैयधिकरण्यं प्रवेश्यताम्, अवच्छे-

---

अपि तु खण्डकालेऽपीति गोसम्बन्धिखण्डकालनिष्ठप्रतियोगिव्यधिकरणाभावीयप्रतियोगितावच्छेदकत्वं खण्डकालासमानकालीनतत्तद्व्यक्तित्वादौ प्रसिद्धमतो नोक्ताव्याप्तिरिति समुदितदीधितिभावमाह तथा चेति । स्वावच्छिन्नेति । स्वं तादृशतत्तद्व्यक्तित्वं तदवच्छिन्नासम्बन्धिगोसम्बन्धिखण्डकालनिष्ठाभावप्रतियोगितावच्छेदकतयैवेत्यर्थः । सुलभमिति । तथा च गोमान्महाकालत्वादित्यादौ नाव्याप्तिरिति भावः ।

न च मौलमित्यादिदीधितिग्रन्थावतारार्थं शङ्कते नन्विति । संयोगेन वस्तुमात्रस्याव्याप्यवृत्तित्वमभिप्रेत्याह हेतुमन्निष्ठेति । धूमादिमन्निष्ठाभावीयेत्यर्थकम् । द्वितीयेति । हेतुमन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकं स धर्मः पारिभाषिकावच्छेदक इत्याकारकपारिभाषिकावच्छेदकत्वद्वितीयलक्षणघटकीभूते यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावे इत्यर्थः । प्रतियोगीति । स्वप्रतियोगितावच्छेदकसम्बन्धेन साध्यतावच्छेदकसम्बन्धेन वा स्वप्रतियोगितावच्छेदकावच्छिन्नासम्बन्धियद्धर्मविशिष्टसम्बन्धिनिष्ठत्वरूपं प्रतियोगिवैयधिकरण्यमित्यर्थः । प्रवेश्यतामिति । तथा च निरुक्तप्रतियोगिवैयधिकरण्यनिवेशे न वह्निमान् धूमादित्यादौ पारिभाषिकावच्छेदकाप्रसिद्ध्याऽव्याप्तिः, घटत्वादेरेव घटत्वादिविशिष्टसम्बन्धिनिष्ठनिरुक्तप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकतया

---

न च तादृशप्रतियोगितानवच्छेदकं यद्धर्मव्यापकमिति विवक्षया न कोऽपि दोष इति वाच्यम् ? सत्तावान् जातेरित्यत्राव्याप्तेः, तद्गुणान्यत्वस्य सत्ताव्यापकत्वात् ।

च्यत्वघटिततृतीयनिरुक्तावपि हेतुमन्निष्ठाभावप्रतियोगितासामान्ये एव धूमत्वविशिष्टसम्बन्धिनिष्ठाभावीयसंयोगसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकीभूतगोत्वत्वाद्यवच्छेद्यत्वाभावात् धूमवान्वन्हेरित्यादावतिव्याप्तिवारणार्थमभावे तद्विशेषणं दीयताम्, प्रथमनिरुक्तौ तु प्रतियोगिवैयधिकरण्यमभावविशेषणं किमर्थमित्याशङ्कते **न चेति** । वाच्यमिति परेणान्वयः । संयोगी द्रव्यत्वादित्यादावव्याप्तिवारणं मौलस्य फलम् अन्यथोपपादयति **संयोगत्वा-**

---

पारिभाषिकावच्छेदकत्वसम्भवादिति तु निरुक्तलक्षणव्याख्यानावसरे एव प्रपञ्चितमिति भावः ।

प्रतियोगिताधर्मिकोभयाभावघटितलक्षणघटकसाध्यतावच्छेदकविशिष्टसम्बन्धिनिष्ठाभावे यथोक्तप्रतियोगिवैयधिकरण्यानिवेशे धूमवान् वह्नेरित्यत्र पूर्वोक्तरीत्यातिव्याप्तिः अतस्तत्रापि तदवश्यं निवेश्यमित्याह **तृतीयेति** । हेतुमन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितासामान्ये साध्यतावच्छेदकयद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदक - धर्मावच्छिन्नत्व-साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभावः तद्धर्मावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरित्याकारकतृतीयलक्षणे इत्यर्थः । तद्विशेषणम् = पूर्वोक्तार्थकप्रतियोगिवैयधिकरण्यविशेषणम् । **प्रथमेति** । हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकधर्मावच्छिन्नाभाववत्यसम्बद्धं यद्धर्मविशिष्टसामान्यं तस्यैव पारिभाषिकावच्छेदकत्वमिति प्रथमपारिभाषिकावच्छेदकत्वलक्षणे इत्यर्थः । **किमर्थमिति** । तथा च प्रथमलक्षणे प्रतियोगिवैयधिकरण्यानिवेशे मूलोक्तलक्षणघटकाभावे प्रतियोगिवैयधिकरण्यविशेषणमप्यनर्थकमिति हृदयम् ।

**अन्यथोपपादयतीति** । तथा च मूलोक्तलक्षणघटकाभावे प्रतियोगिवैयधिकरण्यविरहेऽपि न संयोगीद्रव्यत्वादित्यादावव्याप्तिः, संयोगत्वस्य द्रव्यत्ववन्निष्ठाभावप्रतियोगितावच्छेदकत्वेऽपि तदवच्छिन्नाभाववति द्रव्ये संयोगत्वविशिष्टस्य सम्बद्धत्वात् तदसम्बद्धगगनादिभिन्नत्वाद्य

---

न च यद्धर्मव्यापकत्वे सति यद्धर्मव्याप्यत्वविवक्षया नोक्ताव्याप्तिरितिवाच्यम् ? पृथिवीसमवेतवान् भावत्वादित्यादावतिव्याप्तेः समवेतत्वस्य पृथिवीसमवेतत्वाऽसमनियतत्वात् ।

न च मौलमिदमीयं च प्रतियोगिवैयधिकरण्यमनुपादेयम्, संयोगत्वाद्यवच्छिन्नाभाववति संयोगत्वादिविशिष्टस्य वृत्तेः, गुणादि-निष्ठाभावप्रतियोगितावच्छेदकद्रव्यत्वत्व-द्रव्यमात्रसमवेतत्वाद्यव-च्छिन्नाभाववति चावृत्तेरव्याप्त्यतिव्याप्त्योरनवकाशादिति वाच्यम् ?

वच्छिन्नेति वृत्तेरिति । अव्याप्त्यनवकाशादित्यग्रेऽन्वयः । संयोगी सत्त्वादित्यादावतिव्याप्तिवारणमिदमीयस्य फलमन्यथाकुरुते गुणादीति । द्रव्यत्वत्वम् द्रव्यान्यासमवेतत्वविशिष्टसकलद्रव्यसमवेतत्वम्, तच्च न समवायसम्बन्धेनाभावस्य प्रतियोगितावच्छेदकम्, लाघवेन द्रव्यान्यासम-वेतत्वस्यैव तत्त्वादित्यतस्तथैवाह द्रव्यमात्रेति । द्रव्यान्यासमवेतत्वमि-त्यर्थः । अवृत्तेरिति । अतिव्याप्त्यनवकाशादिति योजना ।

साध्यतावच्छेदकसंयोगत्वे सत्त्वादिति भावः । प्रथमलक्षणघटकतदव-च्छिन्नाभावे प्रतियोगिवैयधिकरण्यविशेषणाभावेऽपि संयोगी सत्त्वादि-त्यादौ नातिव्याप्तिः, हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद् द्रव्यत्वत्वं द्रव्यान्याऽसमवेतत्वं वा तदवच्छिन्नाभाववति गुणादौ संयोगत्वविशिष्ट-स्यासम्बद्धतया साध्यतावच्छेदकस्यैव पारिभाषिकावच्छेदकत्वादित्या-हान्यथा कुरुत इत्यादि । दीधितौ द्रव्यमात्रसमवेतत्वस्यापि हेतुमन्निष्ठा-भावप्रतियोगितावच्छेदकत्वाभिधानप्रयोजनं प्रदर्शयति द्रव्यान्येति । द्रव्यान्यनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वाभावविशिष्टसकलद्रव्य-निरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वमित्यर्थः । सत्तायाः द्रव्यत्व-त्वेन बोधापत्तिवारणाय विशेषणदलम् । रूपादेर्द्रव्यत्वत्वेन बोधापत्ति-वारणाय विशेष्यदलमित्यवधेयम् । तत्त्व = निरुक्तद्रव्यत्वत्वञ्च । तथा-त्वात् = समवायावच्छिन्नप्रतियोगिताकद्रव्यत्वाभावप्रतियोगितावच्छेदक-त्वात् । अतिव्याप्त्यनवकाशादिति । तथा च मूलोक्तलक्षणघटकं पारिभाषिकावच्छेदकत्वप्रथमलक्षणघटकञ्च प्रतियोगिवैयधिकरण्यं निर-र्थकमिति भावः ।

केचित्तु विषयितया वह्नि-पक्षीभूततज्ज्ञानान्यतरसाध्यकतज्ज्ञानत्वसद्धेतावव्याप्तिः, हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकस्य धूमजनकतेजःपक्षीभूततज्ज्ञानान्यतरत्वस्य

धूमवान् वह्नेरित्यादावतिव्याप्तेः, न ह्युत्पत्तिकालावच्छेदेनापि महानसादौ किञ्चित् संयोगेन वर्तते, येन वह्निमदयोगोलकनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकायोगोलकावृत्तिद्रव्यत्वाद्यवच्छिन्नाभाववद्वृत्तित्वं धूमत्वविशिष्टस्य सम्भाव्येत ।

---

धूमवानिति । संयोगेन द्रव्याणामव्याप्यवृत्तितया धूमत्वावच्छिन्नाभाववत्यपि धूमत्वादि विशिष्टस्य सत्त्वादिति भावः । ननु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यदयोगोलकासंयुक्तत्वं धूमत्वविशिष्टस्य तदवच्छिन्नाभाववद्वृत्तित्वादेव नातिव्याप्तिरत आह न हीति ।

---

पारिभाषिकावच्छेदकत्वप्रथमलक्षणघटकतदवच्छिन्नाभावे प्रतियोगिवैयधिकरण्याप्रवेशे धूमवान् वह्नेरित्यादावतिव्याप्तिः हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद् धूमत्वं संयोगेन तदवच्छिन्नाभावस्य पर्वतादावप्युत्पत्तिकालावच्छेदेन वर्त्तमानतया तत्र च धूमत्वविशिष्टस्य सम्बद्धत्वात् तदसम्बद्धगगनादिभिन्नत्वस्य धूमत्वे सत्त्वादित्यादिसमाधानस्य पूर्वमुक्तत्वादिदानीं भावमाह संयोगेनेत्यादि । नह्येत्यादिदीधितिमवतारयति नन्विति । तदवच्छिन्नेति । अयोगोलकासंयुक्तत्वावच्छिन्नाभाववति अयोगोलके असम्बद्धत्वादित्यर्थः । नातिव्याप्तिरिति । तथा च तदवच्छिन्नाभावे प्रतियोगिवैयधिकरण्यविशेषणं पुनरपि निरर्थकम् वह्निमन्निष्ठायोगोलकासंयुक्तत्वावच्छिन्नाभावप्रतियोगितावच्छेदकायोगोलकासंयुक्तत्वावच्छिन्नाभाववति अयोगोलके धूमत्वविशिष्टस्यैवाऽसम्बद्धतया धूमत्वस्यैव पारिभाषिकावच्छेदकत्वसम्भवादिति भावः । दीधितौ नह्युत्पत्तीति । अयोगोलकासंयुक्तत्वावच्छिन्नस्यापि संयोगेनाभावस्योत्पत्तिकालावच्छेदेन महानसपर्वतादौ सत्त्वात् तत्र च धूमत्वविशिष्टस्य सम्बद्धत्वात् धूमवान् वह्नेरित्यादावतिव्याप्तिरस्त्येव यदि तदवच्छिन्नाभावे प्रतियोगिवैयधिकरण्यविशेषणं न स्यात् । तद्विशेषणोपा-

---

साध्यतावच्छेदकविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वात् साध्यतावच्छेदकसमनियतत्वाच्चेत्याहुः ।

इत्थं चावच्छेदकत्वनिरुक्तौ प्रतियोगिवैयधिकरण्यप्रवेशे मूलोक्तहेतुसमानाधिकरणाभावेऽपि तदावश्यकम्, अन्यथा हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतसंयोगत्वाद्यवच्छिन्नाभावस्य प्रतियोगिवैयधिकरण्यावच्छिन्नस्याधिकरणे गुणादौ संयोगत्वादिविशिष्टस्यावृत्तेः संयोगी द्रव्यत्वादित्यादावव्याप्तिरिति भावः। लाघवमभिप्रेत्याह प्रतियो-

---

दानात्तु नातिव्याप्तिः, अयोगोलकासंयुक्तत्वावच्छिन्नासम्बन्धी अयोगोलकासंयुक्तत्वावच्छिन्नाभावसम्बन्धी अयोगोलक एव तत्र च धूमत्वविशिष्टस्यासम्बद्धत्वादिति हृदयम्।

इत्थञ्चेति। निरुक्तातिव्याप्तिवारणार्थञ्चेत्यर्थः। तदावश्यकम् =प्रतियोगिवैयधिकरण्यमावश्यकम्। अन्यथा=मूलोक्तलक्षणघटकाभावे प्रतियोगिवैयधिकरण्याप्रवेशे। अव्याप्तिरिति। तथा च पारिभाषिकावच्छेदकत्वलक्षणघटकतदवच्छिन्नाभावे धूमवान् वह्नेरित्यत्रातिव्याप्तिवारणाय प्रतियोगिवैयधिकरण्यनिवेशस्यावश्यकतया मूलोक्तलक्षणघटकाभावे यदि प्रतियोगिवैयधिकरण्यं न निवेश्यते तदा संयोगी द्रव्यत्वादित्यादावव्याप्तिः द्रव्यत्ववन्निष्ठाभावप्रतियोगितावच्छेदकं यत् संयोगत्वं प्रतियोगिव्यधिकरणतदवच्छिन्नाभाववति गुणे संयोगत्वविशिष्टस्यासम्बद्धतया साध्यतावच्छेदकस्य पारिभाषिकावच्छेदकत्वात्। मूलोक्तलक्षणघटकाभावे प्रतियोगिवैयधिकरण्यनिवेशे तु संयोगाभावस्य हेतुमति द्रव्ये प्रतियोगिव्यधिकरणत्वासम्भवेन तादृशघटाद्यभावमादायैव तत्र नाव्याप्तिरित्याशयः।

लाघवमभिप्रेत्याहेति। सर्वत्र प्रतियोगिवैयधिकरण्याप्रवेशेनेत्यादिः। सर्वत्र प्रतियोगिवैयधिकरण्यानिवेशे पारिभाषिकावच्छेदकत्वलक्षणद्वयस्य समुदितार्थमाह तथा चेति। हेतुसमानाधिकरणाभावीययद्यत्सम्बन्धावच्छिन्नप्रतियोगितावच्छेदकीभूतो यो यत्किञ्चिद्धर्मः तत्तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभाववति असम्बद्धं यद्धर्मविशिष्टसामान्यं स धर्मः पारिभाषिकावच्छेदक इति प्रथमलक्षणार्थः पर्यवसितः।

---

घटत्वे प्रमेये इति। ननु हेत्वधिकरणे यत्प्रतियोगितावच्छेदकावच्छिन्नतादात्म्यसाध्यताघटकान्यतरसम्बन्धावच्छिन्ननिरूपकतानिरूपिताधिकरणत्वसाध्यताव-

प्रतियोगितयोरेकसम्बन्धावच्छिन्नत्वस्य विशेषणताविशेषावच्छिन्नत्वस्य वा विवक्षणे पुनरनुपादेयमेव प्रतियोगिवैयधिकरण्य-

गितयोरिति मौलेदमीयप्रतियोगितयोरित्यर्थः । तथा च हेतुमन्निष्ठाभावीययद्यत्सम्बन्धावच्छिन्नप्रतियोगितावच्छेदकीभूतयत्किञ्चिद्धर्मावच्छिन्नतत्तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभाववदसम्बद्धस्वविशिष्टसामान्यकत्वं प्रथमस्य, द्वितीयस्य तु स्वविशिष्टसम्बन्धिनिष्ठाभावीययद्यत्सम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकीभूतहेतुसमानाधिकरणाभावीयतत्तत्सम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वमर्थः ।

धूमवान् वह्नेरित्यादौ वह्निमन्निष्ठसंयोगावच्छिन्नप्रतियोगितावच्छेदकधूमत्वावच्छिन्नस्य संयोगेनाभाववति पर्वतादौ धूमत्वविशिष्टस्य सम्बद्धत्वादतिव्याप्तिरतो यद्यदिति । तथा च स्वरूपसम्बन्धावच्छिन्नहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकधूमाधिकरणतात्वावच्छिन्नस्य स्वरूपेणाभाववति अयोगोलके धूमत्वविशिष्टस्यासम्बद्धत्वात् नातिव्याप्तिः । धूमत्वघटत्वादितावद्धर्मावच्छिन्नस्य स्वरूपेणाभाववति पर्वतादौ धूमत्वविशिष्टस्य सम्बद्धत्वात् तत्रैवातिव्याप्तिरतो यत्किञ्चित्त्वं धर्मविशेषणम्, तथासति धूमाधिकरणत्वत्वरूपं यत्किञ्चिद्धर्ममादायैव नातिव्याप्तिरिति ध्येयम् । वह्निमान् धूमादित्यादौ तु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकघटाधिकरणतात्वावच्छिन्नस्य स्वरूपेणाभाववति पर्वतादौ घटत्वविशिष्टस्यासम्बद्धत्वात् घटत्वादिकमेव पारिभाषिकावच्छेदकमिति बोध्यम् ।

द्वितीयस्य तु=पारिभाषिकावच्छेदकत्वद्वितीयलक्षणस्य तु । अर्थ इति परेणान्वयः । **स्वविशिष्टेति** । स्वं पारिभाषिकावच्छेदकत्वेनाभिमतः धर्मः । तथा च यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीययद्यत्सम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकीभूतो धर्मः हेतुमन्निष्ठाभावीयतत्तत्सम्बन्धावच्छिन्नप्रतियोगितावच्छेदकतावान् भवति स धर्मः पारिभाषिका-

च्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्ननिरूपकतानिरूपिताधिकरणत्वत्वोभयाभावस्तत्प्रतियोगिताया एव प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावीयप्रतियोगितापदेन

द्वयम् । यत्राधिकरणे व्यभिचारस्तदन्यत्ववत्त्व-तदन्यत्वप्रकारकप्रमा-

तत्तत्संबन्धावच्छिन्नत्वपर्यवसन्नस्यैकसम्बन्धावच्छिन्नत्वस्याननुगमाद्वि-शेषणताविशेषावच्छिन्नत्वप्रवेशावश्यकत्वेन सम्बन्धान्तरप्रवेशे गौरवात्तद-पेक्षया लाघवाच्चाह **विशेषणतेति** । अभावीयविशेषणताया लक्षणघटकत्व-मभिप्रेत्याह **तदन्यत्ववत्त्वेति** । प्रमाविषयत्वीयविशेषणतायास्तथात्वम भि-

वच्छेदक इति पर्यवसितार्थः । अत्रापि संयोगेन द्रव्याणामव्याप्यवृत्तितया घटत्वविशिष्टसम्बन्धिनिष्ठसंयोगावच्छिन्नाभावीयप्रतियोगितानवच्छेदक-गौरवत्वादौ हेतुमन्निष्ठाभावीयसंयोगावच्छिन्नप्रतियोगितावच्छेदकत्व-विरहात् पारिभाषिकावच्छेदकाऽप्रसिद्ध्या वह्निमान् धूमादित्यादावव्या-प्तिरतो यद् यदिति । तथासति घटाधिकरणतात्वस्यैव घटत्वविशिष्टसम्ब-न्धिनिष्ठाभावीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकतया हेतुम-न्निष्ठाभावीयतत्सम्बन्धावच्छिन्नप्रतियोगितावच्छेदकतया च पारिभाषिका-वच्छेदकत्वसम्भवान्नाव्याप्तिरिति ध्येयम् । अत्र च हेतुमन्निष्ठाभावीय-यद्यत्सम्बन्धावच्छिन्नप्रतियोगितावच्छेदकतासमानाधिकरणस्वविशिष्ट-सम्बन्धिनिष्ठाभावीयतत्तत्सम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकताकत्व-स्यैव स्वविशिष्टसम्बन्धिनिष्ठाभावीययद्यत्सम्बन्धावच्छिन्नप्रतियोगि-तानवच्छेदकतासमानाधिकरणहेतुमन्निष्ठाभावीयतत्तत्सम्बन्धावच्छिन्न-प्रतियोगितावच्छेदकताकत्वस्यापि विनिगमनाविरहेण पारिभाषिकावच्छे-दकत्वस्वरूपत्वे बाधकाभावात् तदेव स्वविशिष्टेत्यादिनाभिहितमिति मन्तव्यम् ।

**अननुगमादिति** । संयोगे स्वरूपेऽपि च प्रत्येकमेकत्वस्य सत्त्वेन एकत्वस्यैवाननुगतत्वात् एकसम्बन्धावच्छिन्नत्वस्यापि सुतरामननुगम इति भावः । **विशेषणतेति** अनुगतरूपेण स्वरूपसम्बन्धावच्छिन्नत्व-प्रवेशस्यावश्यकत्वेनेत्यर्थः । ननु प्राचां मते यत्त्वतत्त्वयोरप्यनुगतत्वमेवेत्यत आह **लाघवाच्चेति** । अनन्ताननुगतसम्बन्धनिवेशापेक्षयेत्यादिः । तथा च हेतुमन्निष्ठाभावीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकीभूतयद्-यत्किञ्चिद्धर्मावच्छिन्नप्रतियोगिताकाभाववदसम्बद्धस्वविशिष्टसामान्यकत्वं

विवक्षितत्वान्नोक्तातिव्याप्तिरिति चेन्न ? स्ववृत्तिभेदीयप्रतियोगितावत्त्वसम्बन्धेन घटस्य साध्यतायां वाच्यत्ववत्वहेतावव्याप्तेः, पटाद्यभावस्य हेतुसामानाधिकरण्यविरहात् साध्य-

विषयत्वत्व-साध्यवत्त्वप्रकारकप्रमाविषयत्वत्वादीनां साध्यतावच्छे-
दकविशिष्टसाध्यवन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकत्वात् हेतु-

---

प्रेत्याह तदन्यत्वप्रकारकेति । साध्यवत्त्वस्यावश्योपस्थितिकतया तदघटितधर्मस्योपस्थितिलाघवात तमादायैवातिव्याप्तिवारणं सुघटमित्याशयेनाह साध्यवत्त्वेत्यादि ।

---

प्रथमलक्षणस्य, द्वितीयलक्षणस्य तु स्वविशिष्टसम्बन्धिनिष्ठाभावीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकीभूतहेतुमन्निष्ठाभावीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगितावच्छेदककत्वमर्थं इत्यवधेयम् ।

प्रतियोगिवैयधिकरण्यानिवेशे धूमवान् वह्नेरित्यादिव्यभिचारिण्यतिव्याप्तेः पूर्वमभिहिततया इदानीमपि तत्रातिव्याप्तेः शङ्कास्पदतया तत्रातिव्याप्तिं वारयति दीधितकारो यत्राधिकरण इत्यादि । तथा च प्रतियोगिवैयधिकरण्याऽनिवेशेऽपि धूमत्वादिविशिष्टसम्बन्धिनिष्ठाभावीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकीभूतं यत् अयोगोलकभेदत्वं अयोगोलकभेदप्रकारकप्रमाविषयत्वत्वं साध्यवत्त्वप्रकारकप्रमाविषयत्वत्वं वा तस्य वह्न्यादिमन्निष्ठाभावीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकतया स्वपदेन धूमत्वस्यैव धर्त्तुं शक्यत्वान्नातिव्याप्तिरिति भावः । अयोगोलकभेदत्वादिनानाधर्मस्य हेतुमन्निष्ठाभावीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वाद्यनुधावनबीजमाह टीकायां अभावीयेति । विशेषणताया नानात्वादिति हृदयम् । तथात्वम्=लक्षणघटकत्वम् । साध्यवत्त्वस्य=धूमादिमत्त्वस्य । अवश्योपस्थितिकतयेति । धूमादिमन्निष्ठाभावेत्यादेरुपस्थितेः पूर्वं धूमवत्त्वोपस्थितेरावश्यकतया धूमवत्त्वस्यैव प्रथमोपस्थितिविषयत्वादिति भावः । तदघटितधर्मस्य=धूमादिमत्त्वरूपसाध्यवत्त्वघटितधर्मस्य धूमादिमत्त्वस्य धूमादिमत्त्वप्रकारकप्रमाविषयत्वत्वस्य वा उपस्थितिलाघवात्=प्रथमोपस्थितत्वरूपलाघवात् । तमादाय=साध्यवत्त्वघटितधर्ममादाय । अतिव्याप्तिवारणमिति । इदमुपलक्षणम्,

---

तावच्छेदकसम्बन्धेन वाच्यत्वस्यैवावर्त्तमानतया तेन सम्बन्धेन तदभावस्तु न प्रतियोगिव्यधिकरणः हेत्वधिकरणे वाच्यत्वे वाच्यत्वत्वावच्छिन्नताद्रूप्यान्यतरान्तर्गत-

तावच्छेदकविशिष्टहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वाच्चाति-व्याप्तेरनवकाशात् ।

नन्वेवं हेतुमन्निष्ठाभावीयविशेषणताविशेषावच्छिन्नप्रतियोगितासामान्ये यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीयविशेषणताविशेषावच्छिन्नप्रतियोगितानवच्छे-

---

प्रतियोगिवैयधिकरण्यानिवेशे प्रथमलक्षणेऽपि न धूमवान् वह्नेरित्यादावतिव्याप्तिः वह्निमन्निष्ठाभावीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकायोगोलकभेदत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभाववति अयोगोलके धूमत्वविशिष्टस्यासम्बद्धत्वात् तस्यैव पारिभाषिकावच्छेदकत्वादित्यपि बोध्यम् ।

प्रतियोगिवैयधिकरण्यविशेषणपरित्यागे प्रतियोगिताधर्मिकोभयाभावघटितलक्षणं हेतुमन्निष्ठाभावीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगितासामान्ये साध्यतावच्छेदकीभूतयद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकधर्मावच्छिन्नत्व-साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभावः तद्धर्मावच्छिन्नो हेतुव्यापकः तद्व्यापकसामानाधिकरण्यं हेतौ व्याप्तिरित्येवं रीत्या वक्तव्यम् । तथा च धूमवान् वह्नेरित्यादावतिव्याप्तिः वह्निमन्निष्ठाभावीयस्वरूपसम्बन्धावच्छिन्नधूमाधिकरणत्वनिष्ठप्रतियोगितायां धूमत्वविशिष्टसम्बन्धिनिष्ठाभावीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकधूमाधिकरणतात्वावच्छिन्नत्वस्य सत्त्वेऽपि साध्यतावच्छेदकसंयोगसम्बन्धावच्छिन्नत्वस्य विरहेणोभयाभावस्य सत्त्वात् । हेतुमन्निष्ठाभावीयप्रतियोगितायां स्वरूपसम्बन्धावच्छिन्नत्वानुपादाने वह्निमन्निष्ठाभावीयसंयोगावच्छिन्नधूमाधिकरणत्वनिष्ठप्रतियोगि-

---

तादात्म्यसम्बन्धावच्छिन्ननिरूपकतानिरूपिताधिकरणत्व-साध्यतावच्छेदकसम्बन्धधर्मावच्छिन्ननिरूपकतानिरूपिताधिकरणत्वयोः द्वयोः सत्त्वेन प्रतियोगिव्यधिकरणाभावाप्रसिद्धेरतो नोक्तकल्पः श्रेयानिति ध्येयमित्यास्तां विस्तरः ।

इति श्रीवामाचरणभट्टाचार्यसङ्कलिता पारिभाषिकावच्छेदकत्वद्वितीयलक्षणमनोरमा समाप्ता ।

तथा च विशेषणताविशेषावच्छिन्नयद्धर्म्मविशिष्टसम्बन्धिनिष्ठा-भावप्रतियोगितानवच्छेदकावच्छेद्यत्वं तत्सम्बन्धावच्छिन्नसाधन-

दकीभूतधर्मावच्छिन्नत्व-साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभावः साध्य-तावच्छेदकसम्बन्धेन तद्धर्मावच्छिन्नो हेतुव्यापक इत्युक्तक्रमेण तृती-यार्थः फलितः। तथा च विशेषणताविशेषावच्छिन्नप्रतियोगितासामान्ये एव साध्यतावच्छेदकीभूतसंयोगसम्बन्धावच्छिन्नत्वाभावेन तादृशोभया-भावसत्त्वात धूमवान् वह्नेरित्यादावतिव्याप्तिः । न च हेतुमन्निष्ठाभाव-प्रतियोगितायां विशेषणताविशेषावच्छिन्नत्वं न देयमिति वाच्यम् ? वह्निमत्त्वप्रकारकप्रमाविशेष्यत्वादीनां संयोगादिसम्बन्धेनाभावस्य हेतुमति सत्त्वेन वह्निमान् धूमादित्यादौ सर्वत्रैवाव्याप्तिप्रसङ्गादित्यतः साध्य-तावच्छेदकसम्बन्धावच्छिन्नत्वांशपरित्यागेन तृतीयस्यार्थं निष्कृष्य दर्शयति **तथा चेत्यादिना** । **यद्धर्मेति** यत्पदं साध्यतावच्छेद-कपरम् । **तत्सम्बन्धावच्छिन्नेति** विशेषणताविशेषावच्छिन्नेत्यर्थः ।

तायां निरुक्तोभयस्यैव सत्त्वेन यद्यतिव्याप्तिवारणं सम्भवतीत्युच्यते तदा वह्निमान् धूमादित्यादौ सर्वत्रासम्भवः, धूमवन्निष्ठाभावीयसंयोगा-वच्छिन्नवह्न्यधिकरणत्वनिष्ठायां प्रतियोगितायां वह्निमन्निष्ठाभावीयस्वरूप-सम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकवह्न्यधिकरणतात्वावच्छिन्नत्वसं-योगसम्बन्धावच्छिन्नत्वयोः द्वयोः सत्त्वादित्येवं तथा च विशेषणतेत्यादि-दीधितिमवतारयितुं नन्वित्यादि दर्शयतीत्यन्तेनाह **तथा चेत्यादिनेति** ।

**साध्यतावच्छेदकपरमिति** । तथा च हेतुमन्निष्ठाभावीयस्वरूप-सम्बन्धावच्छिन्नप्रतियोगितासामान्ये साध्यतावच्छेदकयद्धर्मविशिष्ट-सम्बन्धिनिष्ठाभावीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकधर्मा-

❀ अथ प्रतियोगिताधर्मिकोभयाभावघटितलक्षणम् ❀

**असम्भवोऽव्याप्तिर्वा स्यादिति** । तादात्म्येन गोत्वसाध्यकसद्धेतावपि गोत्व-त्वविशिष्टसम्बन्धिनि गोत्वे गोत्वभेदाऽसत्त्वेऽपि गोत्वभेदे प्रतियोगितया वर्त्तमानस्य

अत्र प्रतिपदव्यावृत्तिरुक्तदिशा बोध्या। न च निरुक्तप्रतियोगितासामान्ये यद्ध-र्मविशिष्टसम्बन्धिनिष्ठाभावीयविशेषणताविशेषावच्छिन्नप्रतियोगितावच्छेदका-वच्छेद्यत्वं साधने तद्धर्मावच्छिन्नसामानाधिकरण्यमेव लाघवाद्व्याप्तिरुचितेति

---

वच्छिन्नत्वाभावः, हेतौ तद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वांशपरित्यागेन प्रतियोगिताधर्मिकोभयाभावघटिततृतीयलक्षणार्थः पर्यवसितः, एवञ्च न धूमवान् वह्नेरित्यादावतिव्याप्तिः वह्निमन्निष्ठाभावीयस्वरूपसम्बन्धावच्छिन्नधूमाधिकरणत्वनिष्ठप्रतियोगितायां धूमत्वरूपसाध्यतावच्छेदकविशिष्टसम्बन्धिनिष्ठाभावीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकधूमाधिकरणतात्वावच्छिन्नत्वस्यैव सत्त्वात्, न वा वह्निमान् धूमादित्यादावसम्भवः घटाधिकरणत्वादिनिष्ठायां धूमवन्निष्ठाभावीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगितायां वह्नित्वविशिष्टसम्बन्धिनिष्ठाभावीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकवह्न्यधिकरणतात्वावच्छिन्नत्वविरहादित्याशयः। साध्यतावच्छेदकताघटकसम्बन्धेन साध्यतावच्छेदकवैशिष्ट्यस्य साध्यतावच्छेदकसम्बन्धेन साध्यसम्बन्धित्वादेश्च पूर्वमुक्तत्वादाहात्रेति।

ननु हेतुसमानाधिकरणाभावीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगितासामान्ये साध्यतावच्छेदकीभूतयद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नत्वमस्ति हेतौ तद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्येवं लघुलक्षणं दीधितिकृता कुतः नोक्तं वह्निमान् धूमादित्यादौ धूमवन्निष्ठाभावीयस्वरूपसम्बन्धावच्छिन्नघटाधिकरणत्वनिष्ठप्रतियोगितायां वह्नित्वविशिष्टसम्बन्धिनिष्ठाभावीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकघटाधिकरणतात्वावच्छिन्नत्वस्य सत्त्वेन लक्षणसमन्वयसम्भवात्, न वा धूमवान् वह्नेरित्यादावतिव्याप्तिः वह्निमन्निष्ठाभावीयायोगोलकभेदनिष्ठायां प्रतियोगितायां धूमवन्निष्ठाभावीयतत्सम्बन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नत्वविरहादित्याशङ्कते न चेति। वाच्यमिति परेणान्वयः। निरुक्तेति हेतुमन्निष्ठाभावीयस्वरूपसम्बन्धावच्छिन्नार्थकम्।

---

गोत्वस्य प्रतियोगितासम्बन्धेनाभावसत्त्वात् गोत्वं प्रतियोगितावच्छेदकमेव भव-

वाच्यम् ? सामान्यपदस्य व्यापकतावाचित्वेन निरुक्तप्रतियोगितात्वव्याप-कतावच्छेदकं यद्धर्मावच्छिन्नवन्निष्ठविशेषणताविशेषावच्छिन्नाभावप्रतियो-गितावच्छेदकावच्छेद्यतात्वमित्यर्थपर्यवसानेन प्रमेयधूमवान् वह्नेरित्यादावति-व्याप्त्यापत्तेः, प्रमेयधूमत्वावच्छिन्नवन्निष्ठाभावप्रतियोगितावच्छेदकावच्छेद्य-तात्वस्य गुरुधर्मतया वह्निमन्निष्ठाभावप्रतियोगितात्ववन्निष्ठाभावप्रतियोगि-

---

समाधत्ते सामान्यपदस्येति । प्रतियोगितासामान्ये इत्यत्र सामान्य-पदस्येत्यर्थः । व्यापकतावाचित्वेनेति । अन्यादृशस्य सामान्यपदार्थस्य वक्तुमशक्यत्वात् घटाधिकरणत्वादिनिष्ठायाः प्रतियोगिताया अपि सामा-न्यपदेन धर्तुं शक्यतया धूमवान् वह्नेरित्यादिव्यभिचारिमात्रेऽतिप्रसङ्गा-पाताच्चेति भावः । निरुक्तेति । हेतुमन्निष्ठाभावीयस्वरूपसम्बन्धा-वच्छिन्नप्रतियोगितात्वव्यापकतावच्छेदकमित्यर्थः । यद्धर्मेति । साध्यता-वच्छेदकीभूतयद्धर्मवन्निष्ठाभावीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताव-च्छेदकावच्छिन्नत्वत्वमित्यर्थस्यैव पर्यवसानेनेत्यर्थः । अतिव्याप्तिं योज-यति प्रमेयधूमत्वेति । अयमभिप्रायः, निरुक्तव्यापकतावच्छेदकत्वनिवे-शात् हेतुमन्निष्ठाभावीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगितात्ववन्निष्ठा-भावप्रतियोगितानवच्छेदकं यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीयस्वरूप-सम्बन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नत्वत्वं इत्यर्थस्यैव पर्यव-सिततया प्रमेयधूमवान् वह्नेरित्यादावतिव्याप्तिः, वह्निमन्निष्ठायोगोलक-भेदाभावीयायोगोलकभेदनिष्ठप्रतियोगितायां प्रमेयधूमवन्निष्ठतथाविधा-भावीयप्रतियोगितावच्छेदकावच्छिन्नत्वाभावसत्त्वेऽपि तादृशाभावप्रति-योगितावच्छेदकं लाघवात् धूमत्वविशिष्टसम्बन्धिनिष्ठाभावीयस्वरूप-सम्बन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नत्वत्वमेवेति प्रमेयधूमत्व-विशिष्टसम्बन्धिनिष्ठाभावीयतादृशप्रतियोगितावच्छेदकावच्छिन्नत्वत्वस्य

---

तोति प्रमेयधूमत्वादिकमेव प्रतियोगितानवच्छेदकं विषयित्वादेः संसर्गत्वे मानाभावात् तादृशप्रमेयधूमत्वावच्छिन्नत्वाप्रसिद्ध्यैवासम्भवः । यदि च वृत्त्यनियामकसम्बन्धा-वच्छिन्नप्रतियोगित्वं न स्वीक्रियते तदा निरुक्तगोत्वसाध्यकसद्धेतौ लक्षणगमना-दव्याप्तिरिति तात्पर्यम् । केचित्तु तादात्म्येन रूपसाध्यकसद्धेतौ रूपत्वविशिष्टसम्बन्धि-

तानवच्छेदकत्वेन तादृशप्रतियोगितात्वव्यापकतावच्छेदकत्वात्। अस्माकं तु प्रमेयधूमत्वावच्छिन्नवन्निष्ठाभावप्रतियोगितानवच्छेदकं यद्यःपिण्डभेदत्वं तदवच्छेद्यत्वाभावस्यैव साधनवन्निष्ठाभावप्रतियोगितात्वव्यापकत्वाभावेनातिव्याप्त्यभावात्।

एतेन साधनसमानाधिकरणाभावसामान्ये यद्धर्मावच्छिन्नसमानाधिकरणाभावत्वं, तादृशाभावप्रतियोगितासामान्ये वा यद्धर्मावच्छिन्नसमानाधिकरणाभावप्रतियोगितात्वं साधने तद्धर्मावच्छिन्नसामानाधिकरण्यमेव

---

तादृशाभावप्रतियोगितानवच्छेदकतया हेतुमन्निष्ठाभावीयतादृशप्रतियोगितात्वव्यापकतावच्छेदकत्वात् यद्धर्मपदेन प्रमेयधूमत्वस्यैव धर्त्तुं शक्यत्वादिति।

नन्वेवं यथाश्रुतलक्षणेऽपि सामान्यपदस्य व्यापकत्वार्थकतया भवन्मतेऽपि प्रमेयधूमवान् वह्नेरित्यादावतिव्याप्तिः स्यात् न स्यादित्याह्यस्माकन्त्विति। मते इति पूरणीयम्। प्रमेयधूमत्वेति प्रमेयधूमत्वविशिष्टसम्बन्धिनिष्ठाभावीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकतत्तद्व्यक्तित्वावच्छिन्नभेदकूटवदित्यर्थः। साधनेति वह्निमन्निष्ठाभावीयतथाविधायोगोलकभेदनिष्ठप्रतियोगितात्वव्यापकत्वाभावेनेत्यर्थः। अतिव्याप्त्यसम्भवादिति। न च नचेत्यादिशङ्कितुर्मतेऽपि निरुक्तप्रतियोगितात्वव्याकतावच्छेदकं यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकं यद् यत् तत्तदवच्छिन्नत्ववत्वं इत्यस्य विवक्षणान्नातिव्याप्तिरिति वाच्यम्? तथासति वह्निमान् धूमादित्यादौ सर्वत्राव्याप्त्यापत्तेः,वह्निमन्निष्ठाभावीयप्रतियोगितावच्छेदकीभूततत्तद्धर्मावच्छिन्नत्वाभावस्य चालनीन्यायेन निरुक्तहेतुमन्निष्ठाभावप्रतियोगितायां सत्त्वेन कस्यापि तादृशधर्मावच्छिन्नत्वस्य तादृशप्रतियोगितात्वव्यापकत्वासम्भवात्, अस्माकन्तु वह्नित्वविशिष्टसम्बन्धिनिष्ठाभावीयप्रतियोगितानिरूपिततत्तदवच्छेदकव्यक्तिभेदकूटवद्धर्मावच्छिन्नत्वाभावस्य निरुक्तप्रतियोगितात्वव्यापकत्वान्नाव्याप्तिरिति ध्येयम्।

---

निष्ठाभावप्रतियोगितानवच्छेदकरूपरूपत्वान्यतरत्वमादायोक्तयुक्त्या लक्षणागमनगमनाभ्यामसम्भवाव्याप्त्योः संगतिरित्यप्याहुः।

समानाधिकरणात्यन्ताभावप्रतियोगितासामान्ये नास्ति साधने तद्धर्म्मविशिष्टसामानाधिकरण्यं व्याप्तिरिति पर्यवसितोऽर्थः ।

---

व्याप्तिर्लाघवादित्यपि प्रत्युक्तमिति ध्येयम् । साध्यसाधनभेदेन व्याप्तेर्भिन्नतया प्रमेयवह्नित्वादिना गुरुधर्मेण साध्यतास्थले एव साध्यतावच्छेदकावच्छेद्यत्वाप्रसिद्ध्या प्रोक्तक्रमेण व्याप्तिर्वाच्या ।

---

एतेनेति प्रमेयधूमवान् वह्नेरित्यादावतिव्याप्तिदोषेणेत्यर्थः । प्रत्युक्तमिति परेणान्वयः । साधनेति । हेतुमन्निष्ठस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वव्यापकतावच्छेदकं यद्धर्मविशिष्टसम्बन्धिनिष्ठस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वं साधने तद्धर्मावच्छिन्नसामानाधिकरण्यं लाघवात् व्याप्तिः, अथवा तादृशाभावीयप्रतियोगितात्वव्यापकतावच्छेदकं यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीयप्रतियोगितात्वत्वं तद्धर्मावच्छिन्नसामानाधिकरण्यमेव लाघवात् व्याप्तिर्वाच्येति तात्पर्यम् । तादृशाभावप्रतियोगितासामान्ये वा इत्यत्र वाकारोऽनास्थायाम्, एतदपेक्षया पूर्वकल्पस्यैव लघुत्वादित्यवधेयम् । प्रत्युक्तमिति । तथा च निरुक्तकल्पद्वये एव प्रमेयधूमवान् वह्नेरित्यादावतिव्याप्तिः वह्निमन्निष्ठाभावे प्रमेयधूमवन्निष्ठाभावत्वाभावस्य वह्निमन्निष्ठाभावप्रतियोगितायां वा प्रमेयधूमवन्निष्ठाभावप्रतियोगितात्वाभावस्य वा सत्त्वेऽपि तादृशाभावप्रतियोगितावच्छेदकं धूमवन्निष्ठाभावत्वत्वं धूमवन्निष्ठाभावप्रतियोगितात्वत्वमेव न तु प्रमेयधूमवन्निष्ठाभावत्वत्वादिकं, तस्य गुरुत्वादिति प्रमेयधूमवन्निष्ठाभावत्वत्वादेः तादृशाभावप्रतियोगितानवच्छेदकतया हेतुमन्निष्ठाभावत्वादिव्यापकतावच्छेदकत्वात् अतो निरुक्तरीत्या व्याप्तिलक्षणं नैव वक्तव्यमिति भावः ।

साध्यभेदेनेति । साध्यतावच्छेदकसम्बन्धसाधनादिभेदेनेत्यपि बोध्यम् । प्रोक्तक्रमेणेति । हेतुमन्निष्ठाभावीयस्वरूपसम्बन्धावच्छिन्न-

---

ननु साध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकविशिष्टस्य सम्बन्धित्वाप्रवेशे विषयितया वह्निसाध्यकतज्ज्ञानत्वहेतावव्याप्तिः समवायादिना वह्नित्वविशिष्टस्य

यत्र सद्धेतुविशेषे साध्यतावच्छेदकं न प्रतियोगितावच्छेदकं तत्रैवेयं रीतिरुपादेयेत्यपि वदन्ति ।

गौरवप्रतिसन्धानदशायामपि कम्बुग्रीवादिमान् नास्तीति

---

वह्निमान् धूमादित्यादौ तु लघुरूपेण साध्यतास्थले हेतुमन्निष्ठाभावप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्व-यद्धर्मावच्छिन्नत्वोभयाभावघटितैव सा वक्तव्या, शब्दैक्यस्याकिञ्चित्करत्वा दित्याह **यत्र सद्धेतुविशेष इति** ।

नव्यमतमुपन्यस्यति **गौरवेति** । यादृशप्रतीत्या गुरोरवच्छेदकत्वप्रसिद्धिः तादृशबुद्धौ गौरवज्ञानस्य यदि विरोधित्वं स्यात्तदा मानाभावाद् गुरोरवच्छेदकत्वं न स्यात, न चैतदस्तीति भावः । यद्यपि गौरवज्ञानमात्रं

---

प्रतियोगितासामान्ये यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकधर्मावच्छिन्नत्वं नास्तीत्यादिक्रमेणेत्यर्थः । अगुरुवह्नित्वादिधर्मेण साध्यतास्थले यथाश्रुतोभयाभावघटितलक्षणमेव वाच्यमित्याह **वह्निमान् धूमादित्यादि** । नन्वेवं लक्षणात्मकशब्दभेदः न युक्त इत्यत आह **शब्दैक्यस्येति** । **अकिञ्चित्करत्वादिति** । विभिन्नाया व्याप्तेरेवेतरभेदानुमितौ पक्षत्वसम्भवान्न भागासिद्धिरिति हृदयमिति दिक् ।

गुरुधर्मस्य प्रतियोगितावच्छेदकत्वमभ्युपगच्छतां नव्यानां मतं व्याकुर्वतां दीधितिकाराणां गौरवेत्यादिग्रन्थस्य भावमाह **यादृशेति** । कम्बुग्रीवादिमान्नास्तीत्यादिप्रतीत्येत्यर्थः । गुरोः = कम्बुग्रीवादिमत्त्वादेः । अवच्छेदकत्वसिद्धिः = प्रतियोगितावच्छेदकत्वज्ञानम् । तादृशबुद्धौ=कम्बुग्रीवादिमत्त्वनिष्ठप्रतियोगितावच्छेदकत्वज्ञाने । गौरवज्ञानस्य = कम्बुग्रीवादिमत्त्वं घटत्वापेक्षया गुरु इत्याकारकज्ञानस्य । **प्रमाणाभावादिति** । निरुक्तप्रतिबन्धकसद्भावादिति भावः । न चैतदस्ति=गुरुत्वज्ञानस्य तादृशबुद्धौ प्रतिबन्धकत्वमेव नास्ति ।

ननु प्राचीनमते गौरवज्ञानस्य यदि अवच्छेदकत्वबुद्धौ प्रतिबन्धकत्वं

---

सम्बन्धिनि वह्न्यवयवादौ विषयितया सर्वस्यैवाभावसत्त्वेन यद्धर्मविशिष्टसम्बन्धि-

नावच्छेदकत्वधीप्रतिबन्धकं, विशिष्टसत्तात्वस्य द्रव्यत्वत्वापेक्षया गुरुत्व-ग्रहेऽपि विशिष्टसत्ता नास्तीति प्रतीत्या तदवच्छेदकत्वग्रहस्य प्राच्यैरपि स्वीकृतत्वात् । न च तद्धर्मसमानाधिकरणधर्मधर्मिकस्तदपेक्षया लघुत्वग्रह-स्तद्धर्मस्यावच्छेदकत्वधीप्रतिबन्धकः, नीलधूमत्वसमानाधिकरणधूमत्वे तद-

---

सम्भवति तदैव तस्यातथात्वप्रदर्शनं संगच्छते तदेव तु नेत्याशङ्कते **यद्यपीति** । **गौरवेति** तद्धर्मधर्मिककिञ्चिदपेक्षगुरुत्वज्ञानमात्रमित्यर्थः। **नावच्छेदकत्वेति** । तद्धर्मधर्मिकावच्छेदकत्वबुद्धौ न प्रतिबन्धकमित्यर्थः। कुत इत्याकांक्षायामाह **विशिष्टेति** । तथा च विशिष्टसत्तात्वस्य गुण-कर्मान्यत्ववैशिष्ट्यघटितत्वेन द्रव्यत्वत्वापेक्षया गुरुत्वात् विशिष्टसत्तात्वं द्रव्यत्वत्वापेक्षया गुरु इत्याकारकज्ञानकालेऽपि विशिष्टसत्ता नास्तीति प्रतीतिबलात् विशिष्टसत्तात्वे प्रतियोगितावच्छेदकताग्रहस्य प्राचामप्य-भिप्रेततया निरुक्तरीत्या प्रतिबध्यप्रतिबन्धकभावो न सम्भवतीति हृदयम् । **प्राच्यैरपीति** । न च विशिष्टसत्ताभावप्रतियोगितावच्छेदकत्वं लाघवात् द्रव्यत्व एव कल्पनीयमिति वाच्यम् ? तथासति इदं विशिष्टसत्ताभाव-वदित्याकारकनिश्चयकालेऽपि इदं विशिष्टसत्तावदिति प्रतीत्यापत्तेः ग्राह्य-प्रकारबुद्धौ ग्राह्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावनिश्चयस्यैव प्रति-बन्धकतायाः सर्वसम्मतत्वादित्यग्रे स्फुटीभविष्यतीति ध्येयम् ।

ननु तद्धर्मसमानाधिकरणधर्मविशेष्यकं यत् तद्धर्मापेक्षया लघुत्व-ज्ञानं तदेव तद्धर्मविशेष्यकावच्छेदकत्वज्ञानप्रतिबन्धकं वाच्यम् द्रव्य-त्वत्वस्य विशिष्टसत्तात्वापेक्षया लघुत्वेऽपि तत्र विशिष्टसत्तात्वसामाना-धिकरण्यविरहात् द्रव्यत्वत्वधर्मिकविशिष्टसत्तात्वापेक्षया लघुत्वज्ञान न विशिष्टसत्तात्वे प्रतियोगितावच्छेदकत्वग्रहप्रतिबन्धकमित्याशंक्य समाधत्ते **नीलधूमत्वेति** । तथा च धूमत्वं नीलधूमत्वापेक्षया लघु इत्याकारक-

---

निष्ठाभावप्रतियोगितानवच्छेदकस्यैवाऽप्रसिद्धत्वादित्यव्याप्तिसम्भवे तदनिवेशे धूमवान् वह्नेरित्यादावतिव्याप्तिदानमनुचितमिति चेन्न ? तादात्म्यातिरिक्तवृत्त्यनियामकसम्बन्धेन व्याप्यव्यापकभावानभ्युपगमस्यावयवग्रन्थे भट्टाचार्येण लिखितत्वादित्यभिप्रायेणाति-व्याप्तेरभिहितत्वादिति विभावनीयम् ।

पेक्षया लघुत्वग्रहेऽपि नीलधूमो नास्तीति प्रतीत्या नीलधूमत्वस्यावच्छेदकत्वावगाहनस्य सर्वसम्मतत्वात् । नापि तद्धर्मसमनियतधर्मधर्मिक एव तद्धर्मापेक्षया लघुत्वग्रहस्तद्धर्मस्यावच्छेदकत्वधीप्रतिबन्धक इति साम्प्रतम्, घटज्ञानत्वापेक्षया लघुनोऽपि ज्ञानत्वस्य घटज्ञानत्वसमनियतत्वाभावाद् गुरुणोऽपि घटज्ञानत्वस्य संयोगसम्बन्धावच्छिन्नघटज्ञानाभावस्य प्रतियोगिता-

---

ज्ञानस्य नीलधूमत्वसमानाधिकरणधूमत्वधर्मधर्मिकस्य सत्त्वेऽपि नीलधूमो नास्तीति प्रतीत्या नीलधूमत्व एव तादृशाभावप्रतियोगितावच्छेदकत्वज्ञानं भवति न तु धूमत्वे, तथा सति पीतधूमवत्यपि धूमो नास्तीति प्रत्ययापत्तिः स्यादतो नोक्तप्रतिबध्यप्रतिबन्धकभावोऽपि साधीयानिति भावः ।

ननु तथापि तद्धर्मव्याप्यत्वे सति तद्धर्मव्यापकीभूतो यो धर्मस्तद्विशेष्यकं यत् तद्धर्मापेक्षया लघुत्वज्ञानं तदेव तद्धर्मविशेष्यकावच्छेदकत्वग्रहप्रतिबन्धकं वाच्यम्, धूमत्वस्य नीलधूमत्वसमानाधिकरणत्वेऽपि न नीलधूमत्वव्याप्यत्वं नीलधूमत्वाभाववत्यपि पीतधूमे धूमत्वस्य सत्त्वात् तथा च धूमत्वधर्मिकस्य नीलधूमत्वापेक्षया लघुत्वग्रहस्य न नीलधूमत्वधर्मिकावच्छेदकत्वग्रहप्रतिबन्धकत्वं सम्भवतीति न कोऽपि दोष इति पुनरपि शंकते **नापीति,** साम्प्रतमिति परेणान्वयः । समाधत्ते **घटज्ञानत्वेति ।** उक्तरीत्या प्रतिबध्यप्रतिबन्धकभावकल्पने संयोगेन घटज्ञानं नास्तीत्याकारकाभावप्रतियोगितावच्छेदकत्वज्ञानं ज्ञानत्वमात्रे न स्यात् ज्ञानत्वस्य घटज्ञानत्वव्यापकत्वेऽपि घटज्ञानत्वाव्याप्यत्वात् घटज्ञानत्वाभाववत्यपि पटज्ञाने ज्ञानत्वस्य वर्त्तमानत्वात् ज्ञानत्वधर्मिकघटज्ञानत्वापेक्षलघुत्वग्रहस्य घटज्ञानत्वसमनियतधर्मधर्मिकत्वाऽसम्भवात् तादृशलघुत्वग्रहकालेऽपि यथोक्तप्रतिबन्धकाभावस्यानपायादित्याशयः । **घटज्ञानत्वस्येत्यादि ।** न च संयोगेन घटज्ञानं नास्तीत्यभावीयप्रतियोगितावच्छेदकत्वापत्तिर्न घटज्ञानत्वे सम्भवति तत्र तादृशप्रतियोगितावच्छेदकताया इष्टत्वादिति वाच्यम् ? तथासति संयोगेन पटज्ञान-

---

तदा वह्निमान् धूमादित्यादीति । अथ संयोगावच्छिन्नगोत्वाभावप्रतियोगितायां गोत्वत्वावच्छिन्नत्व-संयोगसम्बन्धावच्छिन्नत्वोभयाभावसत्त्वात् गवेतरासम-

वच्छेदकत्वापत्तेः । तथापि संसर्गमर्यादया प्रतियोगितावच्छेदकत्वग्रहं प्रति तादात्म्येन कम्बुग्रीवादिमत्त्वरूपस्तत्तद्गुरुधर्मः प्रतिबन्धक इति न कदाचिदपि संसर्गमर्यादया तेष्ववच्छेदकत्वग्रह इति प्राचां तात्पर्यम् । वस्तुतः संसर्गमर्यादया कम्बुग्रीवादिमत्त्वावच्छेद्यप्रतियोगिता-कत्वावगाहिज्ञानं प्रति समानविशेष्यत्वप्रत्यासत्त्या कम्बुग्रीवादि-मत्त्वापेक्षया लघुधर्मावच्छिन्नप्रतियोगिताकत्वज्ञानत्वेनैव प्रतिबन्धकत्वं

---

त्वादित्याकारकबुद्धौ संयोगेन घटज्ञानाभावनिश्चयस्याप्रतिबन्धकत्वापत्तेः, अस्माकन्तु तादृशाभावनिश्चयस्य ज्ञानसामान्याभावनिश्चयरूपतया तद्बुद्धौ तादृशनिश्चयस्य प्रतिबन्धकताया आवश्यकत्वादिति ध्येयम् ।

यद्यपीत्यादेरुत्तरं **तथापीति** । संसर्गमर्यादयेत्यत्र मर्यादा विषयता संसर्गतेति यावत्, तृतीयायाश्चाभेदः तस्य चाग्रिमप्रतियोगिताव-च्छेदकत्वस्येत्यत्र प्रतियोगितावच्छेदकत्वपदोत्तरषष्ठ्यर्थविषयतया सहा-न्वयः, अनन्यगतिकत्वात् विभक्त्यर्थे विभक्त्यर्थान्वयस्यापि दृष्टत्वात् । तथा च संसर्गत्वाभिन्नप्रतियोगितावच्छेदकत्वविषयत्वावच्छिन्नविशेषणता-शालिग्रहं प्रति तादात्म्यसम्बन्धेन कम्बुग्रीवादिमत्त्वादिरूपगुरुधर्मः प्रति-बन्धकः इति पर्यवसितोऽर्थः । तेषु = कम्बुग्रीवादिमत्त्वादिरूपगुरुधर्मेषु । अवच्छेदकत्वग्रहः = अवच्छेदकत्वसंसर्गत्वावच्छिन्नविशेषणताशालिग्रहः । कम्बुग्रीवादिमत्त्वादौ सर्वत्र गुरुधर्मे तादात्म्येन गुरुधर्मस्य वर्त्तमानत्वादिति भावः । वस्तुतस्तु स्वनिरूपितावच्छेदकत्वसंसर्गावच्छिन्नप्रतियोगित्वनिष्ठ-प्रकारताशालिग्रहं प्रति तादात्म्येन गुरुधर्मः प्रतिबन्धकः, तेन प्रतियोगि-तावच्छेदकत्वसंसर्गादौ प्रकारतादिविरहेऽपि न क्षतिरिति मन्तव्यम् ।

ननु गुरुत्वं हि किञ्चित्सापेक्षमेव भवति कम्बुग्रीवादिमत्त्वादेरपि किञ्चिदपेक्षया लघुत्वेन तत्रापि गुरुत्वं दुर्लभमित्यत आह **वस्तुत इति** । संसर्गविधया = संसर्गत्वेन । **समानेति** । विशेष्यतासम्बन्धेनेत्यर्थः । **लघ्विति** । घटत्वादिरूपलघुधर्मावच्छिन्नप्रतियोगिताकत्वप्रकारकज्ञान-

---

वेतत्वावच्छिन्नत्वघटितोभयाभावसत्त्वात् संयोगेन गवेतराभावप्रतियोगितायाश्च गवेतरासमवेतत्वावच्छिन्नत्व-संयोगसम्बन्धावच्छिन्नत्वोभयस्यैव सत्त्वात् गोत्वत्वावच्छि-

प्राचामभिप्रेतम्, तथा च जलादौ निर्वह्नित्वस्याग्रहदशायां वह्निमत्त्वभ्रमस्येव उक्तक्रमेण गौरवस्याग्रहदशायामपि कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकत्वेन तादृशग्रहो जायत एव। अन्यथा तदानीमुत्पन्नायाः कम्बुग्रीवादिमान्नास्तीति धियो बाधनिश्चयविधया कम्बुग्रीवादिमत्त्वावच्छिन्नविशिष्टधीविरोधित्वानुपपत्तेः। कम्बुग्रीवादिमत्त्वावच्छिन्नस्य विशिष्टबुद्धौ तदवच्छिन्न-

---

त्वेनेत्यर्थः। तथा च विशेष्यतासम्बन्धेन स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नकम्बुग्रीवादिमत्त्वनिष्ठप्रकारताशालिग्रहं प्रति विशेष्यतासम्बन्धेन स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्ना या कम्बुग्रीवादिमत्त्वापेक्षया लघुधर्मनिष्ठा प्रकारता तच्छालिज्ञानत्वेन प्रतिबन्धकत्वमित्येवं रीत्या प्रतिबध्यप्रतिबन्धकभावः कल्पनीयः, तेन कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताया उभयवाद्यसिद्धत्वेऽपि न क्षतिः। निरुक्तव्यधिकरणसम्बन्धेन कम्बुग्रीवादिमत्त्वनिष्ठप्रकारताकभ्रमस्य सर्वसम्मतत्वादिति परमार्थ इति तु विभावनीयम्। प्राचामभिप्रेतमिति। तथा च अभावमात्र एव गुरुधर्मापेक्षया लघुधर्मावच्छिन्नप्रतियोगिताकत्वप्रकारकज्ञानसम्भवात् तत्र कदाचिदपि न गुरुधर्मावच्छिन्नप्रतियोगिताकत्वावगाहिज्ञानं सम्भवतीति भावः।

उपसंहरति। तथा चेति। निर्वह्नित्वस्य = वह्न्यभावस्य। अग्रहदशायाम् = निश्चयशून्यकाले। वह्निमत्त्वेति। वह्निप्रकारकभ्रमस्येवेत्यर्थः। उक्तक्रमेण = वस्तुत इत्यादिरीत्या। गौरवस्येत्यादि। कम्बुग्रीवादिमत्त्वापेक्षया घटत्वादिरूपलघुधर्मावच्छिन्नप्रतियोगिताकत्वस्याभावे धर्मिणि ज्ञानशून्यकालेऽपीत्यर्थः। तादृशग्रहः = अभावविशेष्यकग्रहः। अन्यथा = कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकत्वेनाभावज्ञानस्यानभ्युपगमे। तदानीम् = निरुक्तगौरवग्रहरूपप्रतिबन्धकविरहकाले। प्रत्ययस्य = निश्चयस्य। बाधेति तदभावप्रकारकनिश्चयत्वेनेत्यर्थः। कम्बुग्रीवादीति कम्बुग्रीवादिमत्त्वावच्छिन्नप्रकारताकज्ञाने इत्यर्थः। तदवच्छिन्नेति कम्बु-

---

त्व-संयोगावच्छिन्नत्वोभयस्य चासत्त्वात् कथं तस्यातिप्रसङ्गाद्यनापादकत्वं सम्भवतीति चेन्न, १ भेदत्वनिरूपितत्व-संयोगसम्बन्धावच्छिन्नत्वोभयत्व एव तादृशप्रतियोगिताव-

प्रतीतिबलाद् गुरुरपि धर्मोऽवच्छेदकः प्रतियोगितायाः ।

प्रतियोगिताकत्वेनाभावनिश्चयस्य विरोधित्वादिति ध्येयम् ।

प्रतीतेर्बलम्, अवच्छेदकत्वावगाहित्वम् । गुरुरपीति । तथा च स्वरूप-

ग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारताकनिश्चयस्ये-त्यर्थः । विरोधित्वादिति । तथा च यथा जलं वह्न्यभाववदित्याकारकनिश्चयशून्यकाले जलं वह्निमदित्याकारकभ्रमोत्पत्तिः सम्भवति प्रतिबन्धकस्यासत्त्वात् तथा कम्बुग्रीवादिमत्त्वापेक्षया लघुधर्मावच्छिन्नप्रतियोगिताकत्वेनाभावग्रहशून्यकालेऽपि कम्बुग्रीवादिमान्नास्तीति प्रतीतिः कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकत्वेनैवाभावावगाहिनी सम्भवतीति गुरुधर्मस्य प्रतियोगितावच्छेदकत्वसिद्धिः प्राचीनैरपि स्वीकरणीया. अन्यथा प्रतिबन्धकशून्यकालोत्पन्नकम्बुग्रीवादिमान्नास्तीत्याकारकनिश्चयकालेऽपि कम्बुग्रीवादिमानस्तीति बुद्ध्यापत्तेः, कम्बुग्रीवादिमत्त्वावच्छिन्नप्रकारताकबुद्धौ कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकाभावनिश्चयस्यैव ग्राह्याभावनिश्चयत्वेन प्रतिबन्धकत्वादिति समुदितग्रन्थतात्पर्यम् ।

प्रतीतेरिति । कम्बुग्रीवादिमान्नास्तीत्याकारकप्रतीतेरित्यर्थः । अवच्छेदकत्वेति । कम्बुग्रीवादिमत्त्वनिष्ठप्रतियोगितावच्छेदकताकत्वे प्रतियोगिताकाभावावगाहित्वमित्यर्थः । गुरुधर्मस्य प्रतियोगितावच्छेदकत्वसिद्धौ यथाश्रुतमेव सिद्धान्तलक्षणं सम्यगित्याह तथा चेति ।

यदि पूर्वोक्तरीत्या कम्बुग्रीवादिमत्त्वाद्यपेक्षया लघुधर्मावच्छिन्नप्रतियोगिताकत्वेनाभावज्ञानं कम्बुग्रीवादिमत्त्वादिनिष्ठावच्छेदकत्वावगाहिग्रहप्रतिबन्धकं प्राचीनसम्मतं तदा कम्बुग्रीवादिमान्नास्तीत्याकारकप्रत्ययस्य कम्बुग्रीवादिमन्निष्ठप्रतियोगिताकाभावावगाहित्वमेव स्वीकरणीयम् । न चोक्तप्रतिबन्धकज्ञानविरहकाले कम्बुग्रीवादिमान्नास्तीत्याकारक-

च्छेदकतायाः स्वीकरणीयत्वात्, तस्य चातिप्रसङ्गाद्यनापादकलघुधर्मत्वसम्भवात् । न च विषयितया गोत्वं नास्तीत्यभावीयप्रतियोगितायां भेदत्वनिरूपितत्वाभावात् कथमिदं सङ्गच्छते इति वाच्यम् ? विषयितायाः संसर्गत्वेमानाभावादिति ध्येयम् ।

न चास्यास्तत्प्रतियोगिकाभावमात्रमवलम्बनम्, तथाविध-यत्किञ्चिद्व्यक्तिसत्त्वे एव तादृशप्रतीतेरनुदयात्। अत एवैकघटवति

सम्बन्धरूपावच्छेदकत्वघटितं मूलोक्तं यथाश्रुतमेव व्याप्तिलक्षणं सम्यक्। प्रमेयधूमत्वादेस्तादृशावच्छेदकत्वेन व्यभिचारिण्यतिव्याप्तिविरहादिति कृतं पारिभाषिकावच्छेदकत्वनिर्वचनेति भावः।

ननूक्तक्रमेण गौरवज्ञानस्य विरोधित्वात्तादृशप्रतीत्यावच्छेदकत्वं नात्र-गाह्यते, परन्तु कम्बुग्रीवादिमन्निष्ठप्रतियोगिताकाभावमात्रमित्याशङ्क्य निषेधति **न चेति** अवलम्बनं विषयः। **तथाविधेति** कम्बुग्रीवादिमत्त्वाश्र-येत्यर्थः। तादृशप्रतीतेः कम्बुग्रीवादिमान्नास्तीत्याकारकप्रतीतेः। **अनुद-यादिति**। तथा च त्वन्मते कम्बुग्रीवादिमदन्तरस्याभावमादाय तदुदयप्रसङ्ग इति भावः। ननु तथाविधयत्किञ्चिद्व्यक्तिनिर्णये स एव प्रतिबन्धकः।

प्रत्ययस्य कम्बुग्रीवादिमत्त्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावावगाहि-ताया आवश्यकतया सिद्धं गुरुधर्मस्यावच्छेदकत्वमिति वाच्यम्? जलादौ बह्न्यभावाग्रहदशायां बह्निप्रकारकज्ञानस्य भ्रमत्ववत् तदानीं उक्तप्रत्यय-स्यापि भ्रमत्वोपगमात् न हि भ्रमादपि कदाचित वस्तुसिद्धिः सम्भवती-त्याशंक्य न चास्यास्तदित्यादिदीधितिमवतारयति **नन्विति**। तादृश-प्रतीत्या = कम्बुग्रीवादिमान्नास्तीत्याकारकप्रतीत्या। जिज्ञासानिवृत्तये त्वाह **परन्त्विति**। **निषेधतीति** दीधितिकार इति शेषः। कम्बु-ग्रीवादिमान्नास्तीत्याकारकप्रत्ययस्य कम्बुग्रीवादिमत्त्वाश्रयनिष्ठप्रतियोगि-ताकाभावमात्रावगाहित्वे भूतलादौ कम्बुग्रीवादिमत्त्वाश्रयतद्घटव्यक्तेः सत्त्वादशायां कम्बुग्रीवादिमान्नास्तीति प्रतीत्युदयापत्तेः तद्घटाधि-करणे कम्बुग्रीवादिमत्त्वाश्रयघटान्तरव्यक्तिनिष्ठप्रतियोगिकाभावसत्त्वात् इत्येवं भावमाह **तथा चेति**। त्वन्मते = गुरुधर्मस्य प्रतियोगितानव-च्छेदकत्ववादिनस्तवमते। **तदुदयेति** कम्बुग्रीवादिमान्नास्तीति प्रती-तेरुदयप्रसंग इत्यर्थः।

अत एवेत्यादि दीधितेरववतारार्थं शंकते ननु **तथाविधेति**।

गगनाभावमादायैवेति। न तु साध्यतावच्छेदकावच्छिन्नसम्बन्धियत्किञ्चि-

**भूतले कम्बुग्रीवादिमान् नास्तीति शब्दो न प्रमाणम्, प्रमाणं च घटसामान्यशून्ये ।**

अन्यथा विशेषादर्शनदशायां तत्रापि कम्बुग्रीवादिमान्नास्तीति प्रतीतिर्जायत एव तत्रेत्यत आह **अत एवेति** । गुरुधर्मस्यावच्छेदकत्वादेवेत्यर्थः । **न प्रमाणमिति** । कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकाऽभावशून्ये कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकाभावप्रकारकत्वेन तादृशान्वयबोधो भ्रम इति

कम्बुग्रीवादिमत्त्वाश्रयतद्घटव्यक्तित्वेन निर्णये इत्यर्थः । स एव = तद्घटव्यक्तिनिश्चय एव । अन्यथा = तद्घटव्यक्तिनिश्चयस्य कम्बुग्रीवादिमान्नास्तीत्याकारकबुद्धावप्रतिबन्धकत्वे । तद्घटव्यक्तित्वेन तद्घटनिश्चयसत्त्वेन वा । **विशेषेति** । कम्बुग्रीवादिमदभावाभावात्मककम्बुग्रीवादिमद्व्याप्यत्वेन तद्घटव्यक्तेः निश्चयशून्यकाले इत्यर्थः । **जायते इति** । यदा तु कम्बुग्रीवादिमद्व्याप्यत्वेन तद्घटव्यक्तेर्निश्चयो नास्ति किन्तु तद्घटत्वेन तद्घटव्यक्तित्वेन वा तद्घटवद् भूतलमित्याकारको निश्चयः वर्त्तते तदा तादृशतद्घटवति भूतले कम्बुग्रीवादिमान्नास्तीति प्रतीतिर्जायताम् कम्बुग्रीवादिमदभावबुद्धौ कम्बुग्रीवादिमत्त्वावच्छिन्ननिश्चयस्य कम्बुग्रीवादिमत्त्वेन तद्घटादिनिश्चयस्य, कम्बुग्रीवादिमद्व्याप्यत्वेन तद्घटत्वाद्यवच्छिन्ननिश्चयस्यैव वा प्रतिबन्धकतया तदानीं तादृशनिश्चयस्य कस्याप्यसत्त्वादित्यनन्यगतिकतया तद्घटत्वावच्छिन्ननिश्चयस्यापि मणिमन्त्रादिन्यायेन कम्बुग्रीवादिमदभावबुद्धौ प्रतिबन्धकताऽवश्यं स्वीकरणीयेति भावः ।

**गुरुधर्मस्य** प्रतियोगितानवच्छेदकत्ववादिनां तथापि न निस्तार इत्यभिप्रेत्य न प्रमाणमित्यादिग्रन्थं व्याकुरुते **कम्बुग्रीवादीति** । कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकाभावाभाववति यत्किञ्चिदेकघटवति भूतले इत्यर्थः । **तादृशेति** । एकघटवति भूतले कम्बुग्रीवादिमान्नास्ती-

द्व्यक्त्यनुयोगिकसाध्यतावच्छेदकसम्बन्धसामान्ये यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वाभाव इत्युक्तावेव सामञ्जस्य उभयाभावनिवेशो व्यर्थ इति चेन्न, सामान्यपदस्य व्यापकत्वार्थकतया तद्वह्निप्रतियोगिकसंयोगेन साध्यतायां सद्धेता-

न चेदेवं लघुरूपसमनियतानां गुरूणामव्याप्यतापत्तिः, गुणादिगुणकर्मान्यत्वविशिष्टसत्तादिसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वनिष्ठायाः प्रतियोगिताया लाघवेन द्रव्यादिनिष्ठाभावप्रतियोगितावच्छेदकत्वत्वेनैवावच्छेदात् । तत्तदवच्छेदकत्वव्यक्तीनां च प्रातिस्विकरूपेणाभावानां युगसहस्रेणापि ज्ञातुमशक्यत्वात् ।

---

तादृशशब्दस्य भ्रमजनकत्वेनाप्रमाणत्वम् । त्वन्मते च कम्बुग्रीवादिमत्प्रतियोगिकाभावशून्यताया घटवत्यभावात् तादृशप्रतीतेर्न भ्रमत्वमिति तादृशशब्दोऽप्यप्रमाणं न स्यादित्यर्थः । ननु भ्रमत्वस्य प्रकारभेदेन भिन्नत्वात् सर्वत्र तदभाववद्विशेष्यकत्वं न भ्रमत्वघटकम्, समवायेन गगनादिभ्रमे

---

त्याकारकवाक्यजन्यबोधरतद्भाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताकज्ञानात्मको भ्रम इत्यर्थः । तादृशशब्दस्य = एकघटवति भूतले कम्बुग्रीवादिमान्नास्तीत्याकारकशब्दस्य । **अप्रमाणत्वमिति** । नव्यानां मते इत्यादिः । सम्भवतीति शेषः । तन्मते च = प्राचीनमते च, गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वमभ्युपगच्छतां मते चेति यावत् । **कम्बुग्रीवेति** । कम्बुग्रीवादिमन्निष्ठप्रतियोगिताकाभावाभावस्येत्यर्थः । घटवति=भूतलादौ । **अभावादिति** । कम्बुग्रीवादिमद्घटान्तरप्रतियोगिकाभावस्यैव घटवति भूतलादौ सत्त्वेन तदभावस्य तत्राऽसत्त्वादिति भावः । **तादृशेति** । एकघटवति भूतले कम्बुग्रीवादिमान्नास्तीत्याकारकशब्दो भ्रमात्मकान्वयबोधाजनक एवेति तस्याप्रमाणत्वं सर्वसम्मतं भवन्मते तु न स्यादित्याशयः ।

**शंकते नन्विति** । भ्रमत्वस्य = तदभाववन्निष्ठविशेष्यताकत्वावच्छिन्नतन्निष्ठप्रकारताकज्ञानत्वस्य । प्रकारभेदेन = रजतत्वादिप्रकारभेदेन । सर्वत्र = सर्वेषु भ्रमेषु । न भ्रमत्वघटकमित्यत्र हेतुमाह **समवायेनेत्यादि** । समवायसम्बन्धेन इदं गगनवदित्याकारकभ्रमे इत्यर्थः । तद्व्यर्थ्यात् = गग-

---

व्याप्यतापत्तेः, साध्यसम्बन्धियत्किञ्चिद्व्यक्त्यनुयोगिकवह्निप्रतियोगिकसंयोगत्व-

तन्निवेशवैयर्थ्यात । तथा च तत्रैव प्रकृतेऽपि कम्बुग्रीवादिमत्प्रतियोगिका-
भावप्रकारतामात्रेण तादृशान्वयबोधो भ्रमो भविष्यतीत्याह **प्रमाणं चेति** ।
तथा च तत्रापि कम्बुग्रीवादिमान्नास्तीति शब्दः प्रमाणं न स्यादित्यकामे-
नापि प्रकृते भ्रमत्वं तदभाववद्विशेष्यकत्वघटितं वाच्यमिति भावः ।

---

नाभाववद्विशेष्यकत्वांशस्य वैयर्थ्यात् । गगनाभावस्य केवलान्वयित्वादित्या-
शयः । उपसंहरति **तथा चेति** । तत्रैव = गगनादिभ्रम इव । **कम्बुग्रीवेति** ।
कम्बुग्रीवादिमन्निष्ठप्रतियोगिताकाभावनिष्ठप्रकारतामात्रेणेत्यर्थः । मात्र-
पदात् कम्बुग्रीवादिमन्निष्ठप्रतियोगिताकाभावाभाववद्विशेष्यकत्वस्य भ्रम-
त्वघटकत्वव्यवच्छेदः । **तादृशेति** । एकघटवति भूतले कम्बुग्रीवादिमा-
न्नास्तीत्याकारकवाक्यजन्यान्वयबोधः कम्बुग्रीवादिमन्निष्ठप्रतियोगिता-
काभावप्रकारताकज्ञानत्वमात्रेण भ्रम इत्यर्थः । तथा च प्राचीनमतेऽपि
तादृशवाक्यस्य भ्रमात्मकान्वयबोधजनकतया अप्रमाणत्वं सुघटमिति
भावः । प्रमाणञ्च घटसामान्यशून्ये इत्यस्य भावमाह **तथा चेति** ।
तत्रापि = घटसामान्यशून्ये देशेऽपि । **प्रमाणं न स्यादिति** । भवन्मते
निरुक्तशब्दजन्यबोधस्य कम्बुग्रीवादिमन्निष्ठप्रतियोगिताकाभावप्रकारक-
त्वेनैव भ्रमरूपतया भ्रमजनकशब्दस्य प्रमाजनकत्वासम्भवात् प्रमात्म-
कान्वयबोधजनकशब्दस्यैव प्रमाणत्वादित्याशयः । अकामेनापि = अनि-
च्छयापि । **तदभावेति** कम्बुग्रीवादिमदभावाभाववद्विशेष्यकत्वादि-
घटितमित्यर्थः । तथा च गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे भवन्मते
एकघटवति भूतले कम्बुग्रीवादिमान्नास्तीत्याकारकशब्दस्याप्रमाणत्वमेव
न स्यादिति भावः ।

**इदन्तु तत्त्वम्** । गुरुधर्मस्य प्रतियोगितावच्छेदकत्वमंगीकुर्वतां
नव्यानां मते यत्किञ्चिदेकघटवति भूतले कम्बुग्रीवादिमान्नास्तीत्याकार-
कशब्दस्य कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकाभावाभाववत्तादृशभूत-
लविशेष्यककम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकाभावप्रकारकज्ञानरूप-

---

समानाधिकरणाभावप्रतियोगितात्वापेक्षया तद्वह्निप्रतियोगिकसंयोगत्वसमानाधिकरणा-
भावीयप्रतियोगितावच्छेदकत्वस्यैव लघुतया तादृशगुरुधर्मावच्छिन्नाभावरूपव्या-
पकत्वस्याप्रसिद्धत्वादतो निरुक्तोभयाभावनिवेशः ।

भ्रमात्मकशाब्दबोधजनकतया तादृशशब्दस्य सर्ववादिसिद्धं भ्रमान्वयबोधजनकत्वरूपमप्रमाणत्वं निराबाधमेव। गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वमभ्युपगच्छतां प्राचीनानां मते तु तादृशशब्दस्य तथाविधमप्रमाणत्वं न सम्भवति, तन्मते एकघटवत्यपि भूतले कम्बुग्रीवादिमद्घटान्तरप्रतियोगिकाभावस्य वर्त्तमानतया निरुक्तशब्दस्य कम्बुग्रीवादिमत्प्रतियोगिकाभाववत्तादृशभूतलविशेष्यकज्ञानात्मकतद्वद्विशेष्यकतत्प्रकारकप्रमाजनकत्वेन भ्रमान्वयबोधजनकत्वरूपाप्रमाणत्वस्य तत्राऽसत्त्वात् प्रमाणतापत्तेरप्यवारणात्। यदि च यथा समवायेनेदं गगनवदित्याकारकभ्रमत्वंवन्तु गगनप्रकारकज्ञानत्वमात्रं न तु गगनाभाववद्विशेष्यकत्वावच्छिन्नत्वमपि भ्रमत्वघटकं प्रयोजनाभावात् तथा एकघटवति भूतले कम्बुग्रीवादिमान्नास्तीत्याकारकशब्दजन्यबोधस्यापि प्राचीनमते कम्बुग्रीवादिमत्प्रतियोगिकाभावप्रकारतयैव भ्रमत्वं सम्भवतीति भ्रमान्वयबोधजनकत्वेन निरुक्तशब्दस्याप्रमाणत्वं प्राचीनमतेऽपि निराबाधमित्युच्यते तदा प्राचां मते घटसामान्याभाववत्यपि देशे कम्बुग्रीवादिमान्नास्तीत्याकारकशब्दस्य सर्वसम्मतं प्रमाणत्वं न स्यात् तादृशशब्दस्यापि कम्बुग्रीवादिमत्प्रतियोगिकाभावप्रकारकान्वयबोधात्मकभवन्मतसिद्धभ्रमजनकत्वेनाप्रमाणत्वात् अतः तदभाववद्विशेष्यकत्वावच्छिन्नतत्प्रकारकज्ञानस्यैव भ्रमत्वं वाच्यम्, तथा चैकघटवति भूतले कम्बुग्रीवादिमान्नास्तीतिशब्दस्य तन्मते अप्रमाणत्वं कथमपि न सम्भवत्यपि तु प्रमाणत्वमेव तस्य स्यादिति।

वह्निनिरूपिता धूमालोकादिनिष्ठा विभिन्नैव व्याप्तिः साध्यवत्साधनादिभेदेनापि व्याप्तेर्भिन्नत्वात्, एवञ्च नव्यमतेऽपि धूमो न वह्निव्याप्य इत्याकारकशब्दस्य आलोकादिनिष्ठवह्निव्याप्त्यभाववति धूमे वह्निव्याप्त्यभावप्रकारकान्वयबोधरूपप्रमात्मकज्ञानजनकतया तस्यापि प्रमाणत्वं स्यात् प्रमात्मकान्वयबोधजनकशब्दस्यैव प्रमाणत्वात्, अतो वह्निनिरूपिता या या व्याप्तिः तत्तद्व्याप्तिव्यक्तित्वावच्छिन्नप्रतियोगिताकाभावकूटस्यैव धूमो न वह्निव्याप्य इत्यादि वाक्यात् धूमादौ बोधोदयाच्च तादृशशब्दस्य प्रमाणत्वं तादृशव्याप्त्यभावकूटान्तर्गतधूमनिष्ठवह्निव्याप्त्यभावस्य धूमे विरहात् तादृशकूटाभाववति तादृशकूटप्रकारकभ्रमान्वयबोधजनकतयैवोक्तशब्दस्याप्रामाणत्वोपपत्तेः। एवञ्च गुरुधर्मस्य प्रतियोगितानवच्छेदक-

व्याप्तिलक्षणासम्भवप्रसङ्गादिति। अथ घटवान् महाकालत्वादित्यत्र

धूमो न वह्निव्याप्य इत्यादेर्वह्निव्याप्त्यभावकूटार्थकत्ववत् कम्बुग्रीवादिमान्नास्तीत्यादावपि कम्बुग्रीवादिमत्प्रतियोगिकाभावकूटबोधकत्वादेव तादृशशब्दस्याप्रामाण्याद्युपपत्तिः, अन्यथा धूमाऽऽलोकसाधारणानुगतव्याप्तेरभावादालोकगर्भव्याप्तित्वावच्छिन्नाभावस्य धूमे सत्त्वात्तमादाय धूमो न वह्निव्याप्य इति वाक्यस्य प्रामाण्यापत्तेः। एवं गुरुधर्मस्यानवच्छेदकतया तादृशधर्मावच्छिन्नविशिष्टबुद्धिं प्रति तादृशधर्माश्रयप्रतियोगिकाभा-

---

त्ववादिनां मते कम्बुग्रीवादिमान्नास्तीत्याकारकप्रत्ययस्यापि तत्तत्कम्बुग्रीवादिमत्प्रतियोगिकाभावकूटावगाहितया यत्किञ्चिदेकघटवति भूतले कम्बुग्रीवादिमान्नास्तीतिशब्दस्याप्यप्रमाणत्वमुपपद्यते। तादृशघटवति भूतले कम्बुग्रीवादिमत्प्रतियोगिकाभावकूटस्यासत्त्वात् निरुक्तशब्दस्य तादृशाभावकूटाभाववति तादृशाभावकूटप्रकारकभ्रमान्वयबोधजनकत्वेन अप्रमाणत्वस्याक्षतत्वात्। घटसामान्यशून्ये च तादृशाभावकूटस्यैव सत्त्वेन तत्रापि कम्बुग्रीवादिमान्नास्तीति शब्दस्य प्रमाणत्वं निर्विवादमेव सम्भवति। न च कम्बुग्रीवादिमत्त्वावच्छिन्नप्रकारताशालिबुद्धौ कम्बुग्रीवादिमत्त्वाद्यवच्छिन्नप्रतियोगिताकाभावादिनिश्चयत्वेनैव प्रतिबन्धकतया कम्बुग्रीवादिमान्नास्तीत्याकारकवाक्यजन्याप्रामाण्यज्ञानानास्कन्दितान्वयबोधदशायां कम्बुग्रीवादिमानस्तीत्याकारकवाक्याधीनान्वयबोधापत्तिरिति वाच्यम्? कम्बुग्रीवादिमत्त्वावच्छिन्नप्रकारताशालिबुद्धिं प्रति प्राचीनमते कम्बुग्रीवादिमत्प्रतियोगिकाभावकूटप्रकारकनिश्चयत्वादिनैव प्रतिबन्धकतायाः गत्यन्तराभावेन कल्पनीयत्वात् इत्येवमाशंक्य न चेदेवमित्यादिदीधितिमवतारयति नन्विति।

इत्यादौ = इत्यादिशब्दे। तादृशशब्दस्य =एकघटवति भूतले कम्बुग्रीवादिमान्नास्तीतिशब्दस्य। अप्रामाण्येति। तादृशाभावकूटाभाववति तादृशाभावकूटप्रकारकान्वयबोधजनकत्वादुक्तशब्दस्येति हृदयम्। अन्यथा=वह्निव्याप्त्यभावकूटार्थकत्वानभ्युपगमे। तमादाय = आलोकगर्भवह्निव्याप्तित्वावच्छिन्नाभावमादाय। तादृशेति कम्बुग्रीवादिमत्त्वावच्छिन्नप्रकारताशालिबुद्धिं प्रति। तादृशधर्मेति। कम्बुग्रीवादिमत्त्वार्थकम्।

---

कालिकसम्बन्धेन घटाद्यभावस्य लक्षणाघटकतया समवायादिना तदभावस्यैव प्रति-

वकूटवत्तानिश्चयत्वेनैवानन्यगत्या विरोधित्वकल्पनात् कम्बुग्रीवादिमान्ना-स्तीति प्रतीतिदशायां कम्बुग्रीवादिमदस्तीति ज्ञानविरोधोऽपि घटते इति प्राचीनमतनिर्भरः, अतो गुरुधर्मस्यानवच्छेदकत्वे व्याप्तेरपि दुर्वचत्वमि-त्याह **न चेदेवमिति**। **लघ्विति**। द्रव्यं गुणाद् विशिष्टसत्त्वाद् वा इत्यादौ द्रव्यत्वसमनियतानां गुणवत्त्वविशिष्टसत्तादीनामित्यर्थः। अव्या-प्तिमुपपादयति **गुणादीति**। ननु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदक-

---

**प्राचीनेति** प्राचीनसिद्धान्त इत्यर्थः। गुरुधर्मस्य = कम्बुग्रीवादिमत्त्वादेः।

गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे व्याप्तेर्दुर्वचत्वं दीधितिकारोक्तं प्रदर्शयति **द्रव्यमित्यादि**। गुणवत्त्वमेव यदि द्रव्यत्वं तदा द्रव्यनिष्ठा-भावप्रतियोगितावच्छेदकत्ववत्वात् गुणवन्निष्ठाभावप्रतियोगितावच्छेदक-त्वत्वमपि नातिरिक्तमिति तदवच्छिन्नप्रतियोगिताकाभावस्याप्रसिद्ध्य-सम्भवात् गुणादेर्द्रव्यत्वव्याप्यत्वं सुघटं स्यादत उक्तं **विशिष्टसत्त्वाद्वेति**। गुणकर्मान्यत्वघटितायाः विशिष्टसत्तायाश्चातिगुरुत्वात्तस्या अव्याप्यत्व-मेवात्राभिप्रेतमिति भावः। **गुणादीतीति**। गुणादिनिष्ठं विशिष्टसत्ता-निष्ठं वा द्रव्यत्वव्याप्यत्वं गुणादिमन्निष्ठाभावप्रतियोगितावच्छेदकत्वत्वा-वच्छिन्नप्रतियोगिताकाभाववत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं तच्च न सम्भवति गुणादिसमानाधिकरणाभावप्रतियोगितावच्छेदकत्व-त्वापेक्षया द्रव्यनिष्ठाभावप्रतियोगितावच्छेदकत्वत्वस्य अतिप्रसङ्गाद्यना-पादकलघुधर्मतया भवन्मते गुरुभूतगुणादिमन्निष्ठाभावप्रतियोगितावच्छे-दकत्वत्वावच्छिन्नप्रतियोगिताकाभावाप्रसिद्धेरित्याशयः।

हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वानि यावन्ति तत्तत्प्रत्येकव्य-क्तित्वावच्छिन्नप्रतियोगिताकाभावकूटवत्साध्यतावच्छेदकावच्छिन्नसामा-नाधिकरण्यमेव हेतौ व्याप्यत्वं तच्च गुणादावपि ज्ञातुं शक्यमेव तथा च प्राचीनमते न कोऽपि दोष इत्याशंकते **नन्विति**। इत्यतः = निरुक्त-

---

योगिव्यधिकरणत्वेन लक्षणघटकत्वात् तदीयप्रतियोगितायाश्च साध्यताघटककालिक-सम्बन्धावच्छिन्नत्वविरहादेव निरुक्तोभयाभावसत्त्वाल्लक्षणमम सम्भवे असम्भवा-भिधानमसंगतमिति चेन्न, कालिकेन महाकालान्यत्वविशिष्टघटाभावस्यापि प्रति-

